ISSN: 755 2277-906X

# ।। श्रीवैष्णवी ।।

## वार्षिकी पत्रिका

२०१३–१४

परिसरभवनम्

प्रकाशकः

राष्ट्रियसंस्कृतसंस्थानम् (मनितविश्वविद्यालयः)

मानवसंसाधनविकासमन्त्रालयाधीनभारतसर्वकारेण सञ्चालितः

श्रीरणवीरपरिसरः, कोट–भलवालः, जम्मूः– १८११२२

# ।। श्रीवैष्णवी ।।

पिण्डत्रय्यां प्रविश्य त्रिभुवनमखिलं लीलया लालयन्ती
दुःखाब्धेरुद्धरन्ती कुकखगगणं विष्णुलोकं नयन्ती ।
सद्यो या द्यौश्च भूम्याः कृतनिजवसतिर्जाम्बवी वैष्णवी सा
नित्यं पायादपायात् कलिमलमलिनान्नः कृपावत्कटाक्षैः ।।

येयं व्याकरणाननेऽतिविमले नेत्रे तथा ज्यौतिषे,
साहित्यस्मितमातनोति तनुते, शिक्षान्तथा दर्शनम् ।
हिन्दीडोगरिकाङ्ग्लनैकजनताभाषासुवासाश्च सा,
कुर्यात्कायवचोमनस्स्वमलतां नित्यश्रिया वैष्णवी ।।

प्रकाशनवर्षम् 2013–2014 ई.
पत्रिका– श्रीवैष्णवी (वार्षिकी) ।
ISSN:755 2277-906X
प्रथमसंस्करणम् – 600 (षड्शतम्) ।

प्रकाशकः – राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः) श्रीरणवीरपरिसरः
कोट–भलवाल, जम्मूः – 181122

अनुभाग : – संस्कृतवागनुभागः,
हिन्दीडोगंरीवागनुभागः
आङ्ग्लवागनुभागः।

प्राप्तिस्थलसङ्केतः–
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः) श्रीरणवीरपरिसरः
कोट–भलवाल, जम्मूः–181122

मुद्रकः– न्यू आर के प्रिन्टर्स,
189–ए, गांधी नगर, जम्मू

|| श्रीः ||

# || श्रीवैष्णवी ||

(वार्षिकी पत्रिका)

2013–2014

संरक्षकः

**प्रो. एन.आर.कण्णन**

कुलपतिमहोदयः

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः), नव देहली।

प्रधानसम्पादकः

**प्रो.पी.एन्.शास्त्री, प्राचार्यः (प्रभारी)**

## सम्पादकमण्डलम्

| | |
|---|---|
| प्रो. यशपाल खजूरिया, | व्याकरणविभागाध्यक्षः |
| प्रो. मनोज कुमार मिश्रः, | वेदविभागाध्यक्षः |
| डॉ. प्रभातकुमार महापात्र, | ज्योतिषविभागाध्यक्षः |
| डॉ. जगदीश राज शर्मा, | शिक्षाशास्त्रविभागाध्यक्षः |
| श्री शरत् चन्द्र शर्मा, | आधुनिकविषयविभागाध्यक्षः |
| डॉ. सतीश कुमार कपूरः | साहित्यविभागाध्यक्षः |
| डॉ. (श्रीमती) सावित्री शतपथी, | दर्शनविभागाध्यक्षा |

## सहसम्पादनम्

डॉ. ज्योतिप्रकाश नन्दः

डॉ. तेजनाथ पौडेलः

डॉ. आशीष कुमार त्रिपाठी

डॉ. डी. दयानाथः

प्रकाशकः

राष्ट्रियसंस्कृतसंस्थानम्, (मानितविश्वविद्यालयः)

श्रीरणवीरपरिसरः, कोट-भलवाल, जम्मू - 181122

# श्रीरणवीरपरिसरस्य प्राचार्य्यपरम्परा

1– डॉ.अनन्तरामशास्त्री, कार्यकारी प्राचार्यः

2– डॉ. अनन्तमरालशास्त्री

3– डॉ. जयदेवगाङ्गुली

4– डॉ. दयानन्दभार्गवः

5– डॉ. मण्डनमिश्रः

6– डॉ. मुरलीधरपाण्डेयः

7– डॉ. जगन्नाथपाठकः

8– डॉ. राघवप्रसादचौधरी

9– डॉ. प्रियतमचन्द्रशास्त्री, कार्यकारी प्राचार्यः

10– डॉ. गुव्वलगङ्गन्ना

11– प्रो. विश्वमूर्तिशास्त्री

12– प्रो. यशपालखजूरियाः,कार्यकारी प्राचार्यः

13– प्रो.एम्.चन्द्रशेखरः , कार्यकारी प्राचार्यः

14– प्रो. पी.एन्.शास्त्री,कार्यकारी प्राचार्यः

# प्रास्ताविकम्

## ।। श्रीवैष्णव्यै नमः ।।

भारतस्य जीवातुः भारतीयसंस्कृतिः संस्कृतनिष्ठेति भारतीया विश्वसन्ति। संस्कृतभाषाप्रचारप्रसाराय मानवसंसाधनविकासमन्त्रालय–भारतसर्वकाराधीनो "राष्ट्रियसंस्कृतसंस्थानस्य श्रीरणबीरपरिसरः" जम्बूकश्मीरप्रदेशे चकास्ति। संस्कृतभाषासम्पन्नानां ज्ञान–विज्ञाननिधीनां संरक्षणाय अभिवर्धनाय च प्रवर्तमानाः आचार्याः परिसरेऽस्मिन् विराजन्ते। प्रादेशिकाः राज्यान्तरादागताश्च परश्शतं छात्राः अत्र अधीयते।

संस्कृतिसंरक्षकस्य महाराजराजेश्वरस्य डुग्गरदेशनृपतेः श्रीरणवीरसिंहस्य मनीषया 1838 तमे वर्षे स्थापितेयं संस्था श्रीरघुनाथसंस्कृतमहाविद्यालयनाम्ना प्रथते स्म। ततः परं 1971 तमे वर्षे संस्थानाधिगृहीतः सन् श्रीरणवीरकेन्द्रीय–संस्कृतविद्यापीठमिति, श्रीरणवीरपरिसरः जम्बूकश्मीरदेशे कोटभलवालस्थानके प्रकृतिरमणीयस्थाने राराज्यते इत्यस्ति इतिहासः।

संस्कृतभाषाप्रसाराय शास्त्रसंरक्षणाय च अध्ययनाध्यापनरतानां छात्राणामाचार्याणां च समवायः निरन्तरं प्रयतते। अध्ययनाध्यापनाभ्यां सह लेखनप्रोत्साहनाय प्रेरिका भवति वार्षिकी पत्रिका। श्रीवैष्णव्याः कृपया परम्परानुसारं श्रीवैष्णवी पत्रिका प्रकाश्यते इति मोमुदीति मे मनः। विविधशास्त्रनिष्णातानामाचार्याणां लेखाः ज्ञानवर्धका इत्यत्र नास्ति संशयः। अत्र छात्राणां लेखनप्रवृत्तिं प्रोत्साहयितुं सदवसरः कल्पितोऽस्ति। प्रायशः प्रथमवारं संस्कृतलेखने समुद्यताः छात्राः स्वलेखनप्रकाशं दृष्ट्वा महान्तं प्रमोदं भजेरन्। हंसक्षीरन्यायेन छात्रलेखपठनास्वादकाः पाठका भवन्तीति विश्वसिमि। श्रीवैष्णवी परिसरस्य कार्यकलापं निरूपयन्ती श्रीवैष्णव्याः कृपया चिरमभिवर्धतामिति कामये।

प्रो.पी.एन्.शास्त्री
प्राचार्य (प्र.)

## "विषयानुक्रमणिका"

GOVERNOR
JAMMU & KASHMIR

RAJ BHAVAN
JAMMU-180001

I am happy to learn that the Rashtriya Sanskrit Sansthan, Kot Bhalwal, Jammu, is shortly bringing out the annual edition of its magazine, "Shri Vaishnavi".

The Rashtriya Sanskrit Sansthan, a Deemed University with its campuses spread all over the country, has been making a valuable contribution towards the preservation and promotion of Sanskrit.

I wish Prof. P.N.Shastry, Principal of the Sansthan, and the Editor of "Shri Vaishnavi", high success in all their endeavours.

4th March, 2014
Jammu

**N.N. Vohra**

डॉ. बिनोद कुमार सिंह, कुलसचिव
Dr. Binod Kumar Singh, Registrar

RASHTRIYA SANSKRIT SANSTHAN
(Deemed University) (Ministry of HRD, GOI)
56-57, Institutional Area, Janakpuri,
New Delhi - 110058

राष्ट्रिय संस्कृत संस्थान ( सम विश्वविद्यालय )

RSKS/Reg./13-14/२४५ 12.12.2013

## Message

It gives me immense pleasure to know that Rashtriya Sanskrit Sansthan, Shri Ranbir Campus, Jammu is shortly bringing out latest edition, 2013-14 of its annual magazine '*Śri Vaiṣṇavī*'.

This magazine provides a glimpse of various literary and cultural activities of Jammu Campus. Here, the faculty members and students contribute articles in Sanskrit, Hindi, English and Dogri languages which give insight of their valuable views. I trust, *Śri Vaiṣṇavī* will do well in the promotion and preservation of intellectual and cultural traditions of our country.

I congratulate Prof. P. N. Shastri, Principal, Jammu Campus and the Chief Editor of '*Śri Vaiṣṇavī*' for his efforts and convey my best wishes to all faculty members and students.

## संदेश

यह मेरे लिए अत्यन्त हर्ष का विषय है कि राष्ट्रिय संस्कृत संस्थान, श्री रणवीर परिसर, जम्मू जल्द ही अपनी वार्षिक पत्रिका '*श्रीवैष्णवी*' का नवीनतम संस्करण 2013-14 प्रकाशित करने जा रहा है।

यह पत्रिका जम्मू परिसर के साहित्यिक एवं सांस्कृतिक उपलब्धियों की झलक प्रस्तुत करती है। इसमें परिसर के अध्यापकों तथा विद्यार्थियों ने संस्कृत, हिन्दी, अंग्रेजी और डोगरी भाषाओं में अपने अन्तर्दृष्टिपूर्ण विचारों को व्यक्त किया है। मुझे विश्वास है कि '*श्रीवैष्णवी*' हमारे देश की बौद्धिक एवं सांस्कृतिक परम्पराओं के प्राचार एवं संरक्षण में सफल रहेगी।

मैं '*श्रीवैष्णवी*' के प्रधान सम्पादक प्रो. पी. एन्. शास्त्री, प्राचार्य, जम्मू परिसर को उनके इस प्रयास के लिए हार्दिक बधाई देता हूँ और सभी अध्यापकों तथा छात्रों के प्रति अपनी ओर से शुभकामनाएँ प्रकट करता हूँ।

Dr. Binod Kumar Singh

RSkS
राष्ट्रिय संस्कृत संस्थान (सम विश्वविद्यालय), 56-57, इन्स्टीट्यूशनल एरिया, जनकपुरी, नई दिल्ली-110058
Tel.: 011-28520979 Fax: 011-28520976 E-mail: registrar.sansthan@gmail.com website: www.sanskrit.nic.in

# राष्ट्रियसंस्कृतसंस्थानश्रीरणवीरपरिसरस्य

## प्राचार्य (प्र.)

## प्रधानसम्पादकश्च

## प्रो. पी. एन्. शास्त्री

# "शिक्षा–दर्शनयोः सम्बन्धः"

प्रो.पी.एन्.शास्त्री
प्राचार्य (प्रभारी)

अत्र प्रबन्धे शिक्षायाः अर्थः, दर्शनस्य तात्पर्यम्, शिक्षा–दर्शनयोः मिथः सम्बन्धः, परस्परं प्रभावश्च प्राच्यपाश्चात्यशिक्षाविदां/दार्शनिकानां काश्चन परिभाषाः परिशील्य निरूप्यन्ते।

संहिता, महासंहिता इति द्विविधं औपनिषदं शिक्षास्वरूपम्, प्राथमिकस्तरे माध्यमिक/उच्चस्तरे च भारतीयशिक्षादर्शनम् आधुनिकशिक्षाव्यवस्थायाम् ओतप्रोतरूपेण संहितं स्यादिति आशयः तुलनात्मकदृष्ट्या प्रतिपादयितुं प्रयत्नः समाद्रियते।

भारतीयसमाजस्य विभिन्नक्षेत्रेषु, विविधेषु जीवनप्रकारेषु, दैनन्दिनक्रियाकलापेषु भारतीयशिक्षादर्शनस्य प्रभावः, आवश्यकता, जनजीवनविकासे अनिवार्यता च प्रस्तूयते।

लघुसमाजात्मककुटुम्बतः राष्ट्ररूपसमाजं प्रति शिक्षाकृतः, दर्शनकृतः च प्रभावः, परिणामः च यथामति विविच्यते।

भारतीय–सामाजिक–सांस्कृतिकपरिप्रेक्ष्ये शिक्षा–दर्शनयोः घनिष्ठः सम्बन्धः प्राचीनाः अर्वाचीनाः च धारणाः परामृश्यन्ते।

मानवजीवनस्य विकासं प्रति शिक्षा–दर्शनयोः महत्त्वं, सर्वतोमुखविकासाय शिक्षाव्यवस्थायां अपेक्षितपरिवर्तनानि यथोचितं, यथावकाशं च विविच्यन्ते।

सर्वोपरि गोष्ठीस्थानां मान्यसदस्यानां मध्ये चर्चाद्वारा चिन्तितपरिष्काराः समाह्रियन्ते। तथा हि –

- शिक्षा नाम सर्वतोमुखविकासः
- शिक्षा नाम सुप्तशक्तेः बहिरानयनम्
- शिक्षा नाम जीवनम्
- शिक्षा नाम सामञ्जस्यम्
- शिक्षा नाम अनुभवः
- शिक्षा नाम व्यवहारपरिवर्तनम्

एवम् अन्यान्यपरिभाषाः स्मर्यन्ते। तथैव भारतीयकरणं नाम–भारतराष्ट्रस्य अन्तस्सत्वम् अन्तर्भाव्य, "भा"–ज्ञाने, रतिः निमज्जनम्।

बहोः कालात् परकीयशासनवशात् भारतस्य स्वरूपं विरूपं कृतं दृश्यते। विकृतस्य भारतस्य स्वत्वं स्थापयितुं भारतीयशास्त्राणां सिंहावलोकनम् अद्यत्वे भृशम् अपेक्ष्यते।

न केवलं तत्त्वज्ञानं भारतीयं, परं तु नवनवीनं विज्ञानमपि भारतीयं इति चिरसत्यं स्मारयितुं भारतीयशिक्षायाः भारतीयकरणम् अत्यावश्यकं वर्तते।

आयुर्वेदः, खगोलविज्ञानम्, शिल्पविद्या, योगशास्त्रम् कृषिविज्ञानम्, सम्पर्कतन्त्रं सर्वमिदं भारतीयशिक्षाद्वारा पुनरुज्जीवितं यथा स्यात् तथा शिक्षायाः भारतीयकरणम् इष्यते।

संशोधनद्वारा नूतनविचाराणाम् आविष्कारः समाजहितकारकाणि, राष्ट्रविकासकारणानि, अनुसन्धानानि शिक्षायाः भारतीयकरणद्वारा यथा सेत्स्यति तथा परिष्कारः इष्यते।

**अन्ताराष्ट्रियाभिबोधः**

"विश्वं भवत्येकनीडम्" अद्यत्वे विविधक्षेत्रेषु विकासकारणतः समग्रं विश्वम् एकं लघुगृहम् इव प्रतीयते। अतः शिक्षा अन्ताराष्ट्रियस्तरे जातं, जायमानं च शीघ्रातिशीघ्रं बहुमुखं विकासम् अभिबोधयितुं समर्था स्यात्। प्राथमिकस्तरेषु एव अयं विषयः सम्यक् बोधितः स्यात्। विभिन्नक्षेत्रेषु यावान् विकासः प्रपञ्चस्तरे जायमानो वर्तते तत्र स्फुटं परिचयः शिक्षाद्वारा दीयते। मानवकुलं सम्पर्कसाधनैः प्रतिदिनं नीड इव दृश्यते। अतः ज्ञानस्य परिधिः शिक्षायाः लक्ष्यं भवेत्। शिक्षया परिचिता प्रतिभाशालिनः भारतीयाः अन्ताराष्ट्रियस्तरे प्रकाशेरन्। तदर्थं विभिन्नस्तरेषु विविधक्षेत्रेषु शिक्षणस्य परिधिः विस्तार्येत।

अयं निजः परो वेति गणना लघुचेतसाम्।<br>
उदारचरितानां तु वसुधैव कुटुम्बकम्।। इति

लोकतन्त्रप्रधाने समाजे विशिष्टरूपेण प्रयुक्ता शिक्षा समाजे परिवर्तनाय भूमिका स्यात्, सैव भूमिका शिक्षायाः सर्जनशीलपक्षस्य अङ्गं च स्यात्। छात्रेषु परिमित–विमर्शात्मकदृष्टिं चोदयन्ती शिक्षा छात्रान् सामाजिकपरिवर्तनाय सज्जीकरोति, किन्तु तत्परिवर्तनं समाजे अङ्गीकृतंमूल्यरूपेण पूर्वमेव उपस्थितं भवेत्।

"गच्छति" इति जगत्। जगदन्तर्भूतो मानवसमाजः प्राचीनकालादारभ्य अद्यावधि निरन्तरं परिवर्तनशीलः, विकासशीलश्च वर्तते। यदा शिक्षायाः प्रसारः मन्दः, तदा अनौपचारिक–अभिकरणद्वारा सामाजिकपरिवर्तनं क्रियमाणमासीत्। अद्य तु शिक्षा सामाजिकपरिवर्तनस्य प्रधानं, प्रबलं च साधनमिति अङ्गीक्रियते। डॉ. राधाकृष्णमहोदयस्य कथनानुसारं–शिक्षा परिवर्तनस्य साधनम्। पूर्वं यत्कार्यं समाजेषु परिवार–
धर्म–सामाजिक–राजनैतिक–संस्थाद्वारा कार्यते स्म तत्कार्यमद्य शिक्षासंस्थाभिः कार्यते।

**किं नाम सामाजिकपरिवर्तनम् ?**

मानवः समाजजीवी। समाजस्य संरचना मनुष्याधीना। समाजस्य मूलाधारः मानवानां अन्तः क्रियाः एव। ताश्च अन्तः क्रियाः निरन्तरं परिवर्तनशीलाः, तस्मात् कारणात् समाजोऽपि परिवर्तनशीलः, वयं प्रतिक्षणमिदम् अनुभवामः, साक्षात्कुर्मः। भेदस्तु–केचन समाजाः क्षिप्रम्, अन्ये च मन्दं परिवर्तन्ते इति। केचन समाजशास्त्रिणः परं समाजं स्थायी समाजः, गतिशीलसमाजः इति द्वेधा वर्णयन्ति। किन्तु स्थायिसमाजे परिवर्तनं नास्तीति न मन्तव्यं, परन्तु परिवर्तनस्य गतिः तथा मन्दा यथा तद् द्रष्टुं न शक्नुमः।

तथा च समाजस्य संरचनायां तत्कार्येषु च सम्बन्धं स्थापयत् परिवर्तनं देशकालावच्छेदेन प्रवर्तते इति संक्षेपः। तदर्थम् अधस्तात् काश्चन परिभाषाः उद्ध्रियन्ते– "ताल्वार" महोदयानुसारं–समाजस्य विभिन्नानि अङ्गानि सुव्यवस्थितरूपेण परस्परं सम्बद्धानि सामाजिकरूपरेखां संरचयन्ति। सेऽयं सामाजिकसंरचना अन्योन्यसम्बद्धसंस्थानां, सामाजिक–अभिकरणानां, समाजे प्रत्येकव्यक्तेः स्थानं, कार्यम् अन्यान्यविषयाणां विशिष्टं व्यवस्थितं च स्वरूपं वर्तते। अस्यां च संरचनायां सामाजिकं स्वरूपं प्रत्येकस्मिन् समाजे भिन्नं भिन्नं विद्यते । अतः एतत्स्वरूपे जायमानं परिवर्तनमेव सामाजिकं परिवर्तनमिति कथ्यते।

**सामाजिकसम्बन्धेषु परिवर्तनम्, जीवने परिवर्तनम्,**

किलापेट्रिक्मतानुसारं–पूर्णरूपेण अंशतो वा, श्रेयसे, अवनत्यै, वा परिवर्तनं स्यात्। असन्, गोटले महोदयौ सांस्कृतिकपरिवर्तनमेव सामाजिकपरिवर्तनं मन्वाते।

मेरिल, एड्रिज् महोदयौ–व्यक्तीनां कार्याणां व्यवहाराणां च परिवर्तनमेव सामाजिकपरिवर्तनमिति न्यरूपयताम्। तदनुसारं महती संख्या स्वपूर्वजानां कार्यापेक्षया भिन्नं कार्यं कुर्वतो दृश्यते चेत् सा एव सामाजिकपरिवर्तनस्य सूचना। माम् महोदयः–सामाजिकपरिवर्तनं नाम यादृशी प्रक्रिया वर्तते तादृशी प्रक्रिया विविधप्रकारकपरिवर्तनैः प्रभाविता दृश्यते । मानवस्य आचार–विचारौ, चिन्तनधारा, इत्यादिषु यत्परिवर्तनमापद्यते तदेव सामाजिकं परिवर्तनम् इति।

स्पेन्सरमहोदयः उद्गिरति–सामाजिकविकास एव सामाजिकपरिवर्तनम् इति।

कुप्पुस्वामि महोदयः– सामाजिकसंरचनायां सामाजिकव्यवहारेषु जायमानं परिवर्तनं सामाजिकपरिवर्तनमिति व्याचष्टे।

प्यारि जान्सन् महोदयः– सामाजिकपरिवर्तनान्तर्गतान् पञ्चप्रकारकाणि परिवर्तनानि प्रतिपादयति यथा–

1– सामाजिकमूल्येषु परिवर्तनम्।

2– संस्थागतं परिवर्तनम्।

3– सम्पदः सामाजिकपुरस्काराणां वितरणप्रणालीगतं परिवर्तनम्।

4– कार्यकर्तृषु (सामाजिक) परिवर्तनम्।

5– कार्यकर्तृणां योग्यतासु अभिवृत्तिषु च परिवर्तनम्।

**सामाजिक–परिवर्तन–सिद्धान्तः**

1– पारम्परिकः, दार्शनिकः, धार्मिकः, च सिद्धान्तः, विश्वस्य अस्तित्वं प्रयोजनपरकम् तथा च प्रत्येकमपि वस्तु पूर्वनिश्चितरूपेण रूपमाधत्ते, तया शक्त्या एव मानवसहितं समग्रं विश्वं गतिशीलम्। तेन विना तृणमपि न चलति।

2– परिवर्तनं विश्वस्य सहजः स्वभावः। तेनैव सिद्धान्तेन सामाजिकं परिवर्तनमपि तार्किकरूपेण चक्रवत् जायते। भविष्यवाणीद्वारा एदादृशं परिवर्तनं पूर्वमधिगन्तुं शक्यते।
3– सामाजिकं परिवर्तनं वस्तुतः व्यापकदृष्ट्या मेयं वर्तते। तथापि आर्थिकघटकानि, राजनैतिकघटकानि अत्र कारणानि इति एकः पक्षः।
4– एकत्र घटितानां विभिन्नानां घटकानां परिणमः सामाजिकपरिवर्तने कारणानि। विविधघटकानामयं समन्वयः परस्परं प्रभावितः सन् समाजे परिवर्तनमानयति। अतः इदमित्थमिति विश्लेषणं दुश्शकम्। अत एवोच्यते सामाजिकपरिवर्तनं सांस्कृतिकपरिवर्तनस्य पर्यायवाचकम् इति। संस्कृतिस्तु बह्वीनां विविधशक्तीनां सापेक्ष–समन्वयस्वरूपिणी वर्तते।

सामाजिकपरिवर्तनस्य कारणभूततत्त्वानि–

म्याक्वेषट् महोदयः अभिप्रैति यत्–सामाजिकपरिवर्तनस्य कारणं संस्कृतिः। विभिन्नधर्माणां तथा आर्थिकव्यवस्थानां तुलनात्मक–अध्ययनेन प्रतिपादितवान् यत् संस्कृतौ परिवर्तनं सामाजिकपरिवर्तनकारणम् इति। वस्तुतः अनेन सह/संस्कृत्या सह–भौतिक–राजनैतिक–वैज्ञानिकप्रौद्यागिककारणानि अपि महत्वपूर्णानि सन्ति। तथा हि–कानिचन परिवर्तनकारकानि प्रस्तूयन्ते–

1– **प्राकृतिककारकम्**–

विज्ञाने सर्वं मदधीनमिति मन्वानो मानवः अद्यापि प्रकृतेरुपरि प्रभुत्वं स्थापयितुम् असमर्थ एव दृश्यते। अत एव प्रकृतिः स्वतन्त्रा सती सामाजिकपरिवर्तनस्य कारकं स्वयं विजृम्भते। प्रकृतेः प्रभावः तदा अनुभूयते यदा प्रकृतिः स्वीयं रौद्ररूपं धत्ते। प्रकृतिविकोपेन पराजितः सन् मानवः नतशिरस्कः सन् धर्मं दैवतं परोक्षशक्तिं शरणं मनुते। (उदा–भूकम्पः, प्रवाहः, क्षामः, भीकररोगः) तत्कारणांत् परिवर्तितदेशः व्यत्यस्तपूर्वजीवनक्रमः मानवः, सहजतः परिवर्तनं भजते। (यत्र प्रकृतिः प्रशान्ता तत्र विज्ञानस्य पुरोगतिः दृश्यते)

2– जनसंख्या– यदा जनसंख्या अत्यन्तं वर्धते तदा निर्धनता, आवश्यकवस्तूनाम् –अभावकारणात् स्वास्थ्यहानिः, फलस्वरूपतः पारिवारिकं सामाजिकं च विघटनं, तद्द्वारा परिवर्तनं जायते। अत्र–जन्म–मृत्युप्रमाणं, तदनुपातः, स्त्री–पुरुष–बाल–वृद्ध–युवकादीनां परस्परमनुपातः, सर्वमिदं परिवर्तनकारकं वर्तते। संतुलितस्थितिरेव सामाजिकसंतुलनं संरक्षत् विकासकार्यं सम्पादयति। (उदा–स्त्रीणामाधिक्ये बहुपत्नीत्वं पुरुषाणामाधिक्ये बहुपतित्वम् इत्यदिकम्)

3– प्रौद्योगिकं कारणम्– आकाशवाणी, दूरदर्शनं, कार्यानं, गृहोपयोगीनि विविधानि यन्त्राणि, समाजे सदस्यानां जीवनरीतिः, विचारधारा, आधुनिकजीवनम् इत्यादिविषयेषु परिवर्तनकारणानि जातानि।

अस्य प्रभावकारणात् समाजे क्षिप्रपरिवर्तनं गुणपक्षे–दोषपक्षेऽपि दृश्यते । यथा–



1– सामुदायिकजीवनक्रमस्य ह्रासः,

2– स्त्री पुरुष–अनुपाते असन्तुलनकारणात् परिवारे समस्याः,
3– मनोरञ्जनस्य व्यापारीकरणम्,
4– मानसिकसंघर्षः, अपरिमितस्पर्धा,
5– अविभक्तकुटुम्बस्य विघटनम्,
6– औद्योगिक विवादः इत्यादयः,

एवं च उपर्युक्तानि अन्यानि च कारकाणि सामाजिकपरिवर्तनं आनयन्ति।

**शिक्षा–सामाजिकपरिवर्तनयोः सम्बन्धः–**

शिक्षायाः प्रक्रियाः समाजस्य क्रियासु अन्तर्भवन्ति। अतः विभिन्नसमाजेषु शिक्षास्वरूपं विविधं वर्तते। समाजन्तर्गता शिक्षा कथं स्यादिति समाज एव निश्चिनोति। यदा समाजस्वरूपे परिवर्तनं जायते तदा शिक्षास्वरूपमपि व्यत्यस्यते। वस्तुतः उभावपि परस्परं परिवर्त्यपरिवर्तकरूपेण स्तः।

**शिक्षाद्वारा सामाजिकपरिवर्तनम्'**

भारतराष्ट्रे आंग्लशिक्षाद्वारा, जातं परिवर्तनं राष्ट्रस्य शैक्षिकविचारेषु प्रधानपरिवर्तनैः विना आधुनिकभारतस्य सामान्यजागरणमेव असम्भवम् आसीत्। (मजुमदारप्रभृतयः)

1– विज्ञान–शिक्षाद्वारा–

आध्यात्मिकमूल्यानां ह्रासः, परम्परागतभावनासु गदाप्रहारः, वैज्ञानिकदृष्टेः कारणात् गुण–दोष–दृष्ट्या समाजे परिवर्तनम्। सामाजिकपरिवर्तने, विघटने च सर्वोपरि स्थितं बलवद् कारणं विज्ञानस्य विकासः। शिक्षाद्वारा सामाजिकपरिवर्तनस्य अनुगमनम् आधुनिकभारतस्य सामाजिक–आवश्यकतानां कारणतः शैक्षिकं परिवर्तनम्।

परतन्त्रे भारते शिक्षायाः तात्पर्यमासीत्–आंग्लशिक्षा–प्रसारः। स्वतन्त्रे भारते–धर्म–निरपेक्षराज्यं, समाजवादी–समाज–स्थापनम औद्योगीकरणम्, जनशिक्षा / साक्षरता इत्यादिकं पुरस्कृत्य शिक्षास्वरूपं, परिवर्त्यमानं दृश्यते। निःशुल्क–प्राथमिकशिक्षा, वयस्कशिक्षा, कृषि–औद्योगिकीकरणार्थं प्रौद्योगिकशिक्षा, स्त्रीशिक्षा इति शिक्षास्वरूपं परिवर्तितं दृश्यते।

2– संस्कृतेरात्मीकरणद्वारा–

आगनर्न महोदयानुसारं–क) भौतिकसंस्कृतिः ख) अभौतिकसंस्कृतिः इति संस्कृतेरङ्गद्वयम्।

क– भौतिकसंस्कृतिः नाम–गृहं, यन्त्राणि, भोगसाधनानि, (मूर्तवस्तूनि)
ख– अभौतिकसंस्कृतिः नाम–(अमूर्तवस्तूनि) भाषा, धर्मः, कला, आचारविशेषाः।

केचन विद्वांसः सांस्कृतिकपरिवर्तनमेव सामाजिकपरिवर्तनं मन्वते। अत एवोक्तं संस्कृतेः आत्मीकरणं शैक्षिकपरिवर्तनमानयति इति।

उदा–(रेडियो) आकाशवाणीरूपसंस्कृतेः आत्मीकरणेन यात्रा कृषिः, स्वास्थ्यं,

राजनीतिः, इत्यादिविषयेषु नूतनं ज्ञानं समधिगम्यते। तथा विद्यालयेष्वपि आकाशवाणी–माध्यमेन अथवा प्रौद्योगिकशिक्षणोपकरणद्वारा नवीनज्ञानप्राप्तिः तद्विकासः च जायतेतराम्। तेनैव कारणेन सिद्धं यत् संस्कृतेः आत्मीकरणहेतोः शिक्षायामपि परिवर्तनमनिवार्यम् आभिकाम्यं च।

3– सामाजिकशक्तिद्वारा– उदा–शिक्षा–आयोगः 1964 राष्ट्रिय शिक्षानीतिः नूतन शिक्षानीतिः 1996 भारतीयसमाजस्य आवश्यकताः आकांक्षाः च अन्तर्भाव्य काले काले शिक्षानीतौ, प्रक्रियासु च परिवर्तनम् दृश्यते।

**शिक्षायाः भूमिका–**

एवं च समाजद्वारा शिक्षायां शिक्षाद्वारा च समाजे परिवर्तनं जायते इति प्रतिपादितं भवति। अतः सामाजिकपरिवर्तने शिक्षायाः भूमिका किञ्चित् विशदीक्रियते। वस्तुतः शिक्षा साक्षात् सामाजिकपरिवर्तनकारणं नाङ्गीक्रियते, परन्तु शिक्षायाः प्रभावः गणनीयो वर्तते।

समाजे प्रतिष्ठितव्यक्तिभिः शिक्षायाः प्रयोगः निश्चितोद्देश्येन क्रियते । जाते च उद्देश्यपरिवर्तने शिक्षास्वरूपे अपि परिवर्तनं जायत एव। अत एव कैश्चित् चिन्तकैः प्रतिपाद्यते यत् शिक्षास्वरूपपरिवर्तनेन भाविसमाजस्य दिक् परिवर्तयितुं शक्यते इति। किन्तु शिक्षायाः परिमितिः वर्तते इति न विस्मर्तव्यम् उदा–स्वतन्त्रतायाः प्राप्तेः अनन्तरं धर्मनिरपेक्ष–राज्यस्थापनार्थं भारते शिक्षास्वरूपस्य परिवर्तनं कृत, किन्तु अद्यापि धर्मसापेक्षं द्वेष–वैषम्य–वैमनस्यादिकं तथैव स्थापयन्तः जीवाम इति विरोधाभास एव।

**महर्षि दयानन्द सरस्वतिमहाभागस्य आशयः**

शिक्षायाः लक्ष्यम्–महर्षेरनुसारम् धर्माचरणं शिक्षायाः परमं लक्ष्यमस्ति। शिक्षणेन शिशुः– आचार–विचारौ, वेश–भूषे, व्यवहारकुशलतां प्राप्नुयात्। प्रत्येकोऽपि भारतीयः वेदवित् भवेत्। वैदिकसंस्कृतेः पुनरुत्थानं प्रधानम् उद्देश्यं वर्तते। ब्रह्मचर्यव्रतस्य पालनं, विद्यार्थिजीवननिर्वहणं, तैत्तिरीयोपनिषदि यथा विहितं तथा स्यादिति अभिप्रैति।

शिक्षायाः प्रारम्भः– गर्भावस्थातः एव शिक्षा प्रारभ्यते। माता सर्वोत्कृष्टा शिक्षिका वर्तते। पितरौ, आचार्यः चेति त्रयः शिक्षकाः उत्कृष्टाः स्युः। शिशोः पञ्चमे वयसि देवनागरिलिपेः परिचयः स्यात्। परिवारे एव शिष्टाचारस्य शिक्षा दीयेत। अष्टमे वयसि विद्यालयं गच्छेत्।

पाठ्यक्रमः शिक्षणविधिः च– सर्वप्रथमम् उच्चारणशिक्षणं भवेत्। ततः परं व्याकरणशिक्षणं दीयेत। यथा–अष्टाध्यायी, धातुपाठः, अनादिकोषः (अमरकोषः) इत्यादयः।

स्त्रीशिक्षाविषये महर्षेः आशयः–

"मन्त्रं पत्नी पठेत्" "ब्रह्मचर्येण कन्या युवानं विन्दते" दयानन्ददिग्विजयकाव्यस्य श्लोकाः उध्रियन्ते। यथा–

मातरो यदि सद्धर्ममानविज्ञानसंस्कृताः।
सद्गुणालंङ्कृतास्युस्तास्तत्सुतास्तर्हि धार्मिकाः।। 71
स्वदेशाभ्युदयो नूनं मातृशक्तिविकासनात्।
मानवोज्वलतामूलं स्त्रीमनोभद्रभावना।। 82

एवमादयः विचाराः भारतीयशिक्षाक्षेत्रे क्रान्तिं चक्रुः। महर्षिः दयानन्दसरस्वतिमहोदयः शिक्षावित्सु अग्रगण्यो विराजते।

**स्वामीविवेकानन्दः**– तदनुसारं शिक्षायाः स्वरूपं–विश्वभानुः उदघोषयत्– यथा व्यक्तौ ज्ञानम् अन्तर्निहितमस्ति। जन्मसिद्धं , स्वतः सिद्धं ज्ञानं प्रकाशयेत् शिक्षा। "जानाति" इत्यस्य आशयः –अनुसन्धात्ते' 'प्रकटयति' इति। व्यक्तेः अन्तर्निहितस्य लौकिक–आध्यात्मिक–ज्ञानस्य अनावरणमेव शिक्षायाः लक्ष्यम्। चरित्रवान्, आचारवान् जीवः सर्वान् अतिशेते, सर्वत्र शोभते। अतः चरित्रवतां निर्माणमेव शिक्षायाः परमं लक्ष्यमिति प्रत्यपादयत्।

शिक्षाणविधिः– ज्ञानप्राप्तेः सर्वोत्कृष्टः पन्थाः "एकाग्रता" वर्तते। शैक्षिकोपलब्धयः एकाग्रताकारणतः सिध्यन्ति। एकाग्रतायाः प्रमाणं, यावदधिकं सिद्धिरपि तावदधिका। एकाग्रचित्तः चर्मकारः पादरक्षां सम्यक् शोधयति/निर्माति, पाचकः भोजनं पचति, वित्तोपार्जनसक्तः वित्तमर्जयति, ईश्वरोपासकः भगवन्तं सम्यगाराधयति। वस्तुतः मनुष्य–पशुभेदः एकाग्रताकारणतः दृश्यते शिक्षायाः साफल्यम् एकाग्रतानिष्ठम् इति विश्वगुरुः स्वामिविवेकानन्दवर्यः अभिप्रैति। गुरु–शिष्यसमवायः (सम्बन्धः) गुरोरन्तेवासी एव सम्यत् शिक्षां लभते। गुरु–गृहवास/गुरुकुलवास एव शिक्षाया प्रधानमङ्गम् अस्ति। परस्परं सहानुभूतिः, प्रेम, विश्वासः एते बिन्दवः शिक्षणं सम्पादयन्ति। इत्यत्रं विस्तरेण।

## *ज्योतिषे हृद्रोगः*

डॉ. प्रभातकुमारमहापात्रः
ज्योतिषविभागाध्यक्ष, उपाचार्यश्च

सुखलिप्सुर्मनुष्यः स्वसुखमाप्तये स्वीयां दिनचर्यां स्वास्थ्यं च विस्मरति। यतोहि स्वस्थशरीरे सुस्थिरं मनः विलसति । नीरोगं शरीरं शुभचिन्तनक्षमं भवति । किं सुखमिति प्रश्नस्योत्तरे महाभारतवचनमुपस्थाप्यते यत्–

अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकेऽत्र सुखानि राजन् ।। 1।।

अनेन सुस्पष्टं भवति यत् नित्यं रुग्णः जनः स्वजीवनस्य सर्वविधं सौख्यं त्यजति। प्रसङ्गावसरे उच्यते "धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्"। जन्मकुण्डल्यां षष्ठभावः रोगभावः इति कथ्यते। अस्य भावस्योपरि शुभग्रहाणां प्रभावः रोगमुत्पादयति। यतः यः भावः शुभग्रहेण, स्वस्वामिना युक्तः दृष्टः वा भवेत्, सः स्वप्राकृतिकफलानामभिवृद्धिं करोति। तथा पापप्रभावेन तस्य प्राकृतिकफलानि व ह्रासतां यान्ति। प्रसङ्गेऽस्मिन् जातकपारिजातग्रन्थे श्रीवैद्यनाथदैवज्ञः कथयति–

तन्वादिभावेषु शुभोदयेषु तद्भावनाथोपगतेक्षितेषु।

तदुक्तभावस्य समृद्धिरुक्ता न पापखेटेक्षितसंयुतेषु।। 2।।

यतः षष्ठभावः रोगभावः इति मन्यते, अस्मात् भावात् मुख्यतया रोगोत्पत्तिः, रोगवृद्धिःसम्बन्धिविषयाः विचार्यन्ते। अतः भावस्योपरि प्रपततो अशुभप्रभावः रोगाभिवृद्धौ मूलकारणं भवति। अत्रावस्थित्रः बलिग्रहः रोगोत्पतिकारकः भवति। अनेन प्रकारेण षष्ठभावे नीचराशिस्थः शत्रुराशिस्थो वा ग्रहः रोगविनाशकः भवत्येव। राहुशनैश्चरौ च द्वौ रोगकारकौ ग्रहौ। रोगोत्पतौ अधः स्थाः ग्रहाः हेतवः भवन्ति। ते यथा–1)षष्ठस्थग्रहः 2)अष्टमस्थग्रहः 3)द्वादशस्थग्रहः, 4)षष्ठेशः 5) षष्ठेशेन सहावस्थितग्रहः। मन्त्रेश्वरः फलदीपिकायां कथयति यत्–

---

1– महाभारतम्

2– जातकपारिजातः 11.2

रोगस्य चिन्तामपिरोगभावः स्थितैर्ग्रहैर्वा व्ययमृत्युसंस्थैः।

रोगेस्वरेणापि तदन्वितैर्वा द्वित्र्यादि सम्बादवशाद्वदन्तु।। 3।।

एवं प्रकारेण रोगस्य विचारः भवति। परन्तु मया विचारितविषयोऽस्ति "हृद्रोगाः, नत् कारणां तत्प्रतिकारोपायाश्च" तत्र हृदयसम्बन्धिनः रोगाः हृद्रोगाः इति कथ्यन्ते। तत्रादौ हृदयं कुत्र भवतिग इति अस्यां जिज्ञासायां नाडीविज्ञाने एव लिखितमस्ति यत्–

देहिनां देहे हृदयं सुखदुः खप्रकाशकम्।

तच्च स्वतः पुनः पुनः संकोचं विकारञ्च करोति।। 4।।

आयुर्वेदशास्त्रानुसारेण हृद्रोगस्य कारणं माधवनिदाने उल्लिखितमस्ति यत्–

अत्युष्णगुर्वम्लकषायतिक्त श्रमाभिघातध्ययनप्रसङ्गैः।

संचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः।। 5।।

हृद्रोगस्य सामान्यलक्षणविषये तत्रैव लिखितमस्ति यत्–

दूषयित्वा रसं दोषा विगुणा हृदयं गताः।

हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते।। 6।।

ज्योतिषशास्त्रे चतुर्थभवात् हृदयस्य विचारो भवति। अतः यदि चतुर्थेशः चतुर्थभावे स्थित्वा पापग्रहप्रभावेण प्रभावितो भवेत्तदा जातकः हृदयरोगेण पीडितो भवति। हृद्रोगः मनस्तथा मस्तिष्कोपरि प्रभावविस्तारं करोति। आवेग–उद्वेग–संसेगेषु विशेषतः संवेगस्योग्रतावशात् हृद्रोगः सञ्जायते। ज्योतिषशास्त्रे मनसः विचारः चतुर्थभावात् तथा मस्तिष्कस्य विचारः पञ्चमभावाद्भवति। अतः द्वावपि भावौ पापप्रभाववेण प्रभावितौ भवतस्तदा जातकः हृद्रोगेण प्रभावितो भवति। तद्यथा जातकपारिजातग्रन्थे श्रीवैद्यनाथाचार्यः कथयति–

हृद्रोगी पञ्चमे पापे सपापे च रसातले

क्रूरषष्ठयंशसंयुक्ते शुभदृग्योगवर्जिते।। 7।।

---

3– फलदीपिका – 14.1

4– नाडीविज्ञानम्

5– माधवनिदानम्

6– माधवनिदानम्



7– जातकपारिजातः 13.69

अर्थात् चतुर्थपञ्चमभावौ यदि पापग्रहैः संयुतौ पुनश्च द्वयोः भावयोः षष्ठयंशयोः क्रूरेण संयुतौ चतुर्थपञ्चमभावौ शुभग्रहैः युतिः दुष्टिः वर्जितैरपि भवेत् तदा जातकः हृद्रोगी भवति।. रोगस्यास्य बहुविधयोगाः जातकग्रन्थेषु प्राप्यन्ते। तेषु केचनयोगाः अत्र समुपस्थाप्यन्ते।

1– यदि चतुर्थभावे पापग्रहाः भवेयुस्तथा चतुर्थेशः पापकर्त्तरि योगे प्रभावितो भवेत्तदा जातकः हृद्रोगेण प्रपीडितो भवति। (सर्वार्थचिन्तामणिः, 5/65)

2– सर्वे पापग्रहाः चतुर्थस्थाः स्युः तथा चतुर्थेशः पापग्रहैः सह भवेत् तर्हि जातकः हृद्रोगी भवति (सर्वार्थचिन्तामणिः, 5/66)

3– चतुर्थेशः यस्मिन्नवांशे भवति तस्याधिपतिः यदि क्रूरषष्ठयंशे वर्तते, क्रूरग्रहैः दृष्टो स्यात् तर्हि जातकः हृद्रोगी भवति। (सर्वार्थचिन्तामणिः 5/67)

4– चतुर्थेशः अष्टमेशेन सह अष्टमस्थो भवेत्तदा जातकः हृद्रोगी भवति। (सर्वार्थचिन्तामणिः)

5– नीचराशिगतः शत्रुराशिगतः अस्तंगतो वा चतुर्थेशः यदि अष्टमस्थो भवेत्तर्हि जातकः हृदयरोगेण पीडितो भवति। (सर्वार्थचिन्तामणिः)

6– चतुर्थभावे यदि शनिसूर्यौ भवेतां तथा षष्ठेशः पापग्रहैः साकमवस्थितो भवेत्तर्हि जातकः हृद्रोगी भवति। (जातकालङ्कारः–3/35)

7– सूर्यभौमगुरवः चतुर्थस्थानगताः स्युः तदा जातकः हृद्रोगी भवति। (जातकालङ्कारः – 3/36)

8– शनिः यदि चतुर्थभावे वर्तते चेत् जातकः हृद्रोगेण पीडितो भवति। (सारावली–30/77)

9– जातकस्य जन्मकुडल्यां कुम्भराशिगतः सूर्यः हृद्रोगजन्यां पीडां जनयति। (सारावली – 22/64)

10– चतुर्थभावगतः षष्ठेशः, शनिः, गुरुर्वा पापग्रहैर्दृष्टः स्यात्तदा जातकः हृत्कम्पनेन पीडितो भवति।

11– भौम–गुरु–शनयः चतुर्थभावस्थाः स्युस्तर्हि जातकः, हृद्रोगी भवति।

12– राहुः चतुर्थभावे स्यात्, लग्नेशः, निर्बलो भवेत्तर्हि जातकः हृद्रोगी भवति।

13– यदि चतुर्थपञ्चमभावौ पापपीडितौ, पापषष्ठयंशगतौ भवेता तदा जातकः हृद्रोगी भवति।

14– पञ्चमभावः पञ्चमेशश्च पापग्रहैः दृष्टः तथा पंञ्चमभावे द्वौ पापग्रहौ स्यातां तदा जातकः हृदयरोगेण प्रपीडितो भवत्येव।

15– यदि पञ्चमेशः द्वादशे अथवा द्वादशाधिपतिना सह युक्तः सन् षष्ठाष्टमे द्वादशे वा स्यात्तदा जनस्य इत्पीडा भवति।

16– वृश्चिकराशिगतः सूर्यः यदि पापग्रहैः प्रभावितः स्यात्तदा जातकः हृत्कम्पजन्यां पीडामनुभवति। (गदावली–2/25)

17– षष्ठेशः सूर्यः पापाक्रान्तः, शुभग्रहैरनवलोकितश्च सन् षष्ठाष्टमव्ययभावगतो वा स्यात् चेत् जातकः हृत्तकम्पमनुभवति।

18– द्वादशस्थराहुः वायुना हृत्कष्टं दाति। (भावप्रकाशः 2/12)

19– चतुर्थभावस्थाः शुभग्रहाः हृत्कम्पकारकाः भवन्ति। (बृ.जातकम्, पृ.5, श्लोक 2)

20– हृत्कम्पनं तदा भवति यदा शुभग्रहाहः क्रराक्रान्ताः भवन्ति एवञ्च षष्ठेशः पापयुक्तः भवति। (गदावली 2/27)

21– हृद्रोगानां विविधकारणानि समालोच्य अंधुना कानिचित् उदाहरणकुण्डलानि अत्र समुपस्थाप्यते–हृदयाधिपः सूर्यः। हृत्कष्टकारकदशायां यदि सूर्यः पापग्रहैः पीडितो भवति तदा आकस्मिकरूपेण हृत्पीडा जायते। तथा राहुकेतू द्वौ ग्रहौ आकस्मिकरोगकारको भवतः। अतः राहुकेतुभयां प्रभावितोऽयं सूर्यः पापग्रहैः पीडितो भवेत्तदा आकस्मिकरूपेण हृत्पीडा जायते। तथा राहुकेतुभयां द्वौ ग्रहौ आकस्मिकरोगकारकौ भवतः। अतः राहुकेतुभयां प्रभावितोऽयं सूर्यः जातकस्य हृद्रोगस्य कारणं भवति। प्रसङ्गेऽस्मिन् कानिचनुदाहरणानि समुपस्थाप्यन्ते।

उदाहरणम् –1

अस्या जन्मकुण्डल्यां केतुः लग्नस्थो वर्तते। लग्नात्पञ्चमभावः तथा पञ्चमेशः मङ्गलस्योपरि स्वानिष्टकारी आकस्मिकं प्रभावं विस्तारयति। लग्नस्थेकेतुः स्वनवमदृष्ट्या पञ्चमराशीं सिंह, पञ्चमेशं सूर्यं च पश्यति। केतुः शनिना दृष्टः, अतः पञ्चमभावः, पञ्चमेशः पञ्चमभावस्थराशिश्चैते सर्वे हृद्रोगोत्पन्नकारिणः केतोरनिष्टप्रभावेन प्रभाविता भवन्ति। अस्मात्कारणात् एषः व्यक्तिविशेषः हृद्गतिरोधरोगेण प्रपीडितः आसीत्। अस्य गतकस्य मृत्युरपि हृद्रोगकारणादेव अभवत्।

उदाहरणम्–2

एषा जन्मपत्रिका भारतस्य भूतपूर्वप्रधानमन्त्रिणः स्वः श्रीलालबहादुरशास्त्रिमहोदयस्य अस्ति। अस्यां जन्मकुण्डल्यां लग्नेशः हृदयद्योतकः सिंहराशौ अस्ति। अष्टमेशः बुधः सिंहस्याधिपतिः, सूर्येण सह स्थित्वा हृदयरोगं द्योतयति। सूर्यचन्द्रलग्नाधिपौ एकभावस्थितौ भवतः। सुदर्शनपद्धत्यनुसारेण सर्वे अष्टमभावस्योपरि हृद्रोगं विचारयन्ति। अष्टमभावः शनेः केन्द्रीयप्रभावेन प्रभावितोऽस्ति। शनिरपि अस्यां जन्कुण्डल्यां हृदयद्योतकः यतः शनिः सूर्यात्पञ्चमभावे अवस्थितोऽस्ति। शुक्रोऽपि हृदय द्योतकः। यतो हि सः सूर्यात् नवमाधिपतिः तथा नवमः पञ्चमात्पञ्चमोऽस्ति। अतः शुक्रस्य तद्भावोपरि दृष्टिः हृदयरोगं द्योतयति। गुरुः सूर्यात् चतुर्थभावे अवस्थितः हृदयरोगं द्योतयति। अतः एतेषां सर्वेषां ग्रहाणां प्रभावेण सः आकस्मिकहृद्घातेन मृत्युलोकं गतवान्।

हृद्रोगस्य निराकरणम्–

हृद्रोगस्य बहुविधानि कारणानि आलोचितानि दैवज्ञैः। अधुना तु तस्य निराकरणार्थमुपायाः समुपस्थाप्यते। यदि ग्रहाः प्रतिकूलाः स्युः तर्हि औषधयः अपि फलप्रदाः न भवन्ति। अतः प्रथमतः ग्रहशान्तिकरणानन्तरं हि चिकित्साकरणेन लाभः भवति। उच्यते यत्–

ग्रहेषु प्रतिकूलेषु नानुकूलं हि भेषजम्।

ते भेषजानां वीर्याणि हरन्ति बलवन्त्यपि।।

प्रतिकृत्य ग्रहानादौ पश्चात्कुर्याः चिकित्सितम्।

ग्रहाणां अशुभप्रभावानां निवारणार्थं मुख्यतया रत्नं, मन्त्रः, औषधिः, दानं तथा स्नानादीनामुपयोगः भवति। तत्र रत्नविज्ञानं, मन्त्रशास्त्रं, आयुर्वेदशास्त्रं तथा धर्मशास्त्रञ्चेत्यादिग्रन्थेषु रत्न–मन्त्र, औषधि–दान–स्नानादीनां विस्तरेण विवेचनं प्राप्यते। अतः सूर्यस्योपचारकरणेन जातकस्य रोगनिवारणं भवति। तत्रादौ सूर्यस्य बीजमन्त्रः–

"नमो भास्कराय मम सकलग्रहाणां पीडानाशनं कुरु कुरु हुं फट्"

अयं मन्त्रः एकविंशतिबारं जप्त्वा तदनन्तरं सूर्यस्य स्तवकपाठः करणीयः।

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम्।

ध्वान्तारिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्।।

सूर्यः हृदयस्य कारकः। अतः कुण्डल्यां यदि सूर्यस्योपरि वा सूर्यस्य गृहोपरि राहोः प्रभावः स्यात् तर्हि हृद्गतिरोधस्य सम्भावना सम्भाव्यते। विशेषरूपेण यदि पञ्चमभावपञ्चमेशौ

राहुणा प्रभावितौ तर्हि जातकः हृदरोगेण पीडितो भवति। अतः सूर्यग्रहस्य कृते रविनारायणव्रतं तथा राहुग्रहस्य कृते सर्पपूजनादिकमभीष्टं वर्त्तते।

सूर्यशान्त्यर्थं मन्त्राः मन्त्राणां मुख्यरूपेण द्वौ विभागौ भवेतां वैदिकतान्त्रिकप्रभेदौ। वैदिकविधाने तु (मननात् त्रायते इति मन्त्रः) अर्थात् येषां आर्षशब्दानां चिन्तनेन मनुष्यस्य विचलितं मनः त्रायते, कष्टनिवृतिश्च जायते स मन्त्ररीति कथ्यते। सूर्यस्य वैदिकमन्त्रः यथा– आकृष्णेन रजसा वर्त्तमाननिवेशयन्नमृतं मर्त्यञ्च।

हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन्।। 8।। यजुर्वेदः

सुगो हि वो अर्यमन् मित्र पन्था अनृक्षरो वरुण साधुरस्ति।

तेनादित्या अधितोचना नो चरूछता नो दुष्परिहन्तु शर्मः।। 9 ।। ऋग्वेदः 2–27–6

यः हृद्रोगी भवति सः प्रतिदिनमुपर्युक्तमन्त्राणाम् अष्टोतरशतबारं (108) जपं कुर्यात्। वैदिकज्योतिषपुस्तके पृ. 314 हृदयरोगपरिशमनाय अर्जुनवृक्षवल्कलं धारणीयमिति विचारः विद्यते। अथर्ववेदस्य द्वितीयकाण्डे चतुर्थसूक्ते मन्त्राभिमन्त्रितविधानं एवञ्च तस्य धारणविधानमपि वर्तते। इति शम्।

---

8– यजुर्वेदः

9– ऋग्वेदः 2–27–6

<u>सन्दर्भग्रन्थसूची–</u>

1– महाभारतम्, गीताप्रेस गोरखपुर

2– जातकपारिजातः, वैद्यनाथः, चौखम्भा संस्कृत संस्थानम् वाराणसी

3– फलदीपिका, मन्त्रेश्वरः, मोतीलाल बनारसीदास वाराणसी

4– नाडीविज्ञानम्

5– माधवनिदानम्, माधवः

6– सर्वार्थचिन्तामणि, वेङ्कटाद्रिदैवज्ञः चौखम्भा संस्कृत संस्थानम् वाराणसी

7– जातकालङ्कारः गणेशदैवज्ञः चौखम्भा संस्कृत संस्थानम् वाराणसी

8– सारावली, कल्याणवर्मा, मोतीलाल बनारसीदास वाराणसी

9– गदावली, शुकदेवचतुर्वेदी, दिल्ली

10– भावप्रकाशः, जीवनाथः, चौखमभा संस्कृत सीरीज आफिस वाराणसी

11– बृहज्जातकम्, वराहमिहिरः, मोतीलाल बनारसीदास वाराणसी

## शैक्षिकप्रविधेः नवाचारा
# (INNOVATIONS IN EDUCATION TECHNOLOGY)

डॉ. जगदीशराज शर्मा
अध्यक्षः, शिक्षासंकाय

विश्वस्मिन् प्रचलितशिक्षायां तेषु वर्षेषु अनेककाठिन्यानाम् अपसरणं कृत्वा नवोपलब्धयः प्राप्ताः। अत्र कासुचित् आवश्यकतासु आसमंजस्यं दृश्यते, येषां परिष्कारस्य आवश्यकता प्रतीयते। यद्यपि आधुनिकप्रविधेः प्रोन्नतये वर्तमानशिक्षायां परिष्कारः भवितुं शक्यते। अस्याः शिक्षायाः अवधारणा (Concept), प्रबन्धनम् (Administration), पाठ्यवस्तुः (Contents) शिक्षणविधयः (Teaching Methods) संसाधनानि (Sources) एवञ्च अन्य पक्षाणाम् उपलब्धिः भवितुं शक्यते।

1. **नवीन–परिवर्तित अवधारणा** (Concept of Innovation) –

आधुनिक शिक्षा–प्रविधे विकासस्य मार्गे (Tracking) विशेषतया नवविचाराः (New Ideas) नवप्रविधयः (New Techniques) सर्वेषाम् अधिगन्तायैः क्रियमाणः भवन्ति।

शैक्षिकप्रविधेः सहयोगं सशक्तम् कर्तुं एवं विकसित् उत्तमश्रेव्यः (Extensive) सामाजिकसंसाधनानि, यैः शिक्षायाम् आकर्षणं जन्यते तै एकं प्रभावपूर्णे प्रचलिताः अर्न्तजाला शिक्षासञ्चार (Network) निर्मातुं सहायको भवति।

अद्यतनीया शिक्षा दूरस्थसंगणक–आधारितशिक्षायाः (Modern Distance Computer Education) वैश्वीकरणे (Globlization) सम्भवम् अभवत्।

आधुनिकविश्वपरिप्रेक्ष्ये चीन, अमेरिका, यूरोप आदि देशेषु शिक्षाया अन्ताराष्ट्रियकरणक्षेत्रेषु शैक्षिकप्रविधेः समाधिको प्रभावो अस्ति। तत्र विश्वचक्रे भारतस्य स्थानं शैशवास्थायां दृश्यते।

सीमायाः उभयो स्थाने (Cross Border) शिक्षायाः क्रयः विक्रयः (Inter Exchange), शिक्षायाः संसाधनानां जिज्ञासापूर्तये अद्यतनीयशिक्षाप्रविधेः पूर्णलाभः प्राप्तुं शक्यते।

अन्यदेशानाम् उत्तमा प्रोन्नता च शिक्षायाः संसाधनानाम् उपयोगः (Introduces) करणीयम् तथा च स्वदेशीयशिक्षायाः संसाधनानां (Domestic Resources) विक्रयः भवितव्यम्।

2. **प्रबन्धननवाचारः** (Management Inovation) –

वर्तमानयुगे दीयमाना प्रचलिता शिक्षाया आधुनिकशिक्षाप्रविधेः प्रबन्धने (Modern

Management Technology) प्रयोगाय अधोलिखिताः लयाः प्राप्तुं शक्यन्ते –

(i) परिवर्तनशीलता (Flexibility) –

परिवर्तनशीलता (Fexibility) एवं साधारण (Open) प्रबन्धन नीतयः (Administrative strategies), स्वतन्त्रतापूर्वकं शिक्षणे योगदानं कुर्वन्ति। यस्य पृष्ठभूमिः पृथक् भवति तथा अधिगमस्य आवश्यकता अपि विभिन्नाः सन्ति।

विभिन्नप्रकाराणां पञ्जीकरणस्य विधाः (Forms) समाधिकाः अधिगन्तारम् आकर्षयन्ति।

**सूचना प्रौद्योगिकी** (Information Technology) –

सूचना प्रौद्योगिक्यां प्रबन्धनस्य विधीनां प्रयोगं कृत्वा, यस्मिन् शिक्षणस्य स्तरं नियन्त्रणं, प्रणाल्यां समावेशेन समान्य उच्चशिक्षाप्रणालीं सशक्तां करिष्यति तथा वर्तमानप्रचलिताः शिक्षायाः (Continuing Education) स्तरे गुणवत्तायां वृद्धिः भविष्यति।

प्रचलितशिक्षायाः मार्किट माडल (Market Model) शिक्षायाः क्रयः विक्रय–प्रतिमाने निश्चितरूपेण नवीनतायां समावेशा अपेक्षिता भवति। एकस्याः पूर्णायाः विक्रयप्रणालयः निर्धारणं भवितव्यम् यया शिक्षायाः क्रयः विक्रयः यथार्थरुपेण विभाजितं (Analize) कर्तुं शक्नुयात्।

आधुनिक शैक्षिकप्रविधेः प्रयोगः क्रयः–विक्रयः मार्किट–नीतयः (Marketining Strategies) तथा विक्रयस्य प्रसारणं (Advertisement) भवेत्। समाधिकाः जनसंचारतन्त्र (Media) येन शिक्षायाः विभिन्नतानां (Discrimination) प्रभावशीलतां सशक्ताः भवितुं शक्नुयात्। विशेषतया संवेगात्मकः मानवीयः विक्रयः स्तरे यथा अधिगन्तायाः सदस्य–सभा/परिषद् (Membership club) या अर्न्तजाले (Internet) आधारिता भवन्ति।. या प्रचलिता शिक्षायाः चिह्नानि शिक्षायां गुणवत्तायाः समावेशाय विशिष्टानि (Roll) कार्याणि सम्पादयन्ति।

3. **पाठ्यवस्तोः नवाचारा (Content Inovation)** –

विषयवस्तुनः नवीनता प्रचलिता शिक्षायां उचितं (Accurate) एवं यथार्थ (Appropriate) विकासाय अत्यन्त महत्त्वपूर्णम् अस्ति। प्रचलिता शिक्षायां शिक्षाया पाठ्यवस्तुः व्यक्ते सर्वाङ्गीणावश्यकतानां पूर्तिः भवितव्यम्।

सामान्यतया प्रचलितशिक्षायाः उद्देश्यं (Focus) – नवीनसिद्धान्ताः (New Theories) नवीनज्ञानं (Nero knowledge) नवीनकौशलानां शिक्षणाय दृष्टिपातः भवितव्यम्।

इदं मानवीयगुणान् प्रति एवं उर्वरतासृजनतां (Potential Creativity) ध्यानं देयम्।

आधुनिककाले शिक्षायां ज्ञाने उपरि चीन देशे सर्वाधिकं ध्यानम् अस्ति। अत्र अस्माकं देशे गुणवत्ता (Quality) नवीनता (Innovation) च मध्ये महत्त्वपूर्णम् अन्तरम् (Gap) दृश्यते। उत्पादककौशलम् (Production Skill) तथा गुणवत्ता (Quality) प्रशिक्षणस्य विकासाय, प्रोन्नतये (Development and upgradation) आधुनिकप्रौद्योगिकी प्रविधेः यथा – वीडियो कान्फ्रेसिंग (Video confrancing) प्रयोगः भवितव्यम्। यैः पृथक्–पृथक् अध्यापकै अर्जितज्ञानस्य विभिन्नतत्त्वानां विश्लेषणादन्तरं संश्लेषणं भवितव्यम्। तथा उत्पादक–अध्यापनस्य (Producctive Teaching) दृश्यस्य समस्तकक्षायां प्रयोगः भवितव्यम्।

वैयक्तिकाधिगमं विश्वजनीनभिवृत्तिरस्ति (Universal Trend) । सामग्रीसंकलनप्रविधिः (Data Storage Technology) एक आधुनिकतायुक्ता वैयक्तिकयुक्ता (Modernized and Indivalized) प्रचलितमाना–शिक्षा प्रणाली अन्तरजालै (Network) निर्माणं कर्त्तव्यम्। सामग्रीसंकलनप्रविधेः (Data Storage Techonology) प्रयोगः वैयक्तिकधिगमे भवितव्यम्।

**4. विधिः नवाचारा (Method Innovation) –**

आधुनिकप्रचलितशिक्षायाः आवश्यकतानां वृद्धिरस्ति। सर्वकारस्य पार्श्वे संसाधनानि पर्याप्तानि न सन्ति यतो हि आवश्यकतानां पूर्तिः भवेत्। अस्य कृते आधुनिकी सूचना प्रौद्योगिकयाः (Modern Information Techonology) प्रयोगः एका ज्वलन्त समस्याः (Warning issue) समाधिकाः संसाधनानां उपलब्धता प्रतीयते। नवीनशिक्षणप्रविधेः (New Teaching technology) विकासः भवितव्यः। उदाहरणार्थं प्रत्यक्षप्रसारणे (Live Boardcasting) उत्पादकताया क्षेत्रे अन्तरजालप्रक्रियायाः (Site Via Internet) शतशः सहस्रशः वा जिज्ञासवः लाभान्विताः भवितुं शक्यन्ते।

अधीयमानशिक्षायां नवीनशिक्षणविधिनाम् अधिको प्रभावो अस्ति। अयं न केवलम् अध्यापन–क्रियां प्रभावित करोति अपितु च प्रशिक्षूणां नवीनतायाः विवेकबुद्धिम् अपि प्रभावितं करोति।

**संसाधनानां नवाचाराः (Resrouces Innovation) –**

शिक्षायाः संसाधनानां नवीनतायां – प्रारुपनिर्माणे (Designing), विकासकरणे (Developing) प्रयोगकर्तुं (Utilizing), मूल्याङ्कने (Evaluating) एवञ्च शिक्षणस्य संसाधनानाम् उपलब्धये इत्यादि तत्त्वानां समावेशः भवति।

अध्यापकः शिक्षणसंसाधनानां बीजकोशः उत् वा आन्तरिकभागः भवति। प्रचलितमानायां शिक्षायां तिस्रः प्रकारकाः अध्यापकाः भवन्ति –

1. एकः मंहाविद्यालयस्य आचार्य (Professor) यः क्रमवद्धरूपेण शिक्षण–सिद्धान्तानां शिक्षणविधीनां च विशेषज्ञः भवेत्।
2. प्रसिद्धविद्वान् भवेत् उत् वा सफलता प्राप्तः कोऽपि मानवः भवेत् यस्य पार्श्वे

सामाजिकसेवाया अभ्यासस्य समाजिकानुभवः भवेत् तथा समस्यायाः ज्ञानाय तथा समाधानाय च अद्वितीय (Unique) क्षमता भवेत्।

3. विदेशस्य उत् वा स्वदेशस्य अधिकारी यः विषयस्य विशेषज्ञः भवेत्।

उपर्युक्तसदस्याः नवीन पाठ्यक्रमस्य विकासाय कथम् अभिन्नरूपेण उपयोगी भवितुं शक्यन्ते। वर्तमानशैक्षिकप्रविधेः अध्यक्षः प्रचलितमानायां शिक्षायां महत्त्वपूर्णदिशा–निर्देशः प्रदानं कर्तुं शक्यन्ते।

शैक्षिकसंसाधनेषु नवाचाराः (Innovation) अपेक्ष्यन्ते येन वास्तविकरूपेण अगो भवितव्यम्। शैक्षिकसंसाधनेषु भागग्रहिता महत्त्वपूर्णः अस्ति पर अस्माकं देशे अस्य अभावः दृश्यते। सुव्यवस्थितपाठ्यक्रमस्य प्रचलनाय सर्वोत्तमशिक्षण संसाधनेषु भागग्रहितायै (Sharing) दृष्टिपातः (Focus) भवितव्यम्।

अद्यतनीय सम्प्रेषण–प्रविधिः, यस्मिन् अर्न्तजाल (Internet) एवं अकाशीयप्रकाशः (Setlite) माध्यमेन अन्तर–विद्यालयीय (Inter School) एवं अन्तर प्रबन्धात्मक (Inter Management) मानव संसाधनानां (Human Resources) उपयोगः कर्तुं शक्यते।

अमेरिका चाइन, यूरोपादि देशेषु अस्यां दिशि तीव्रगत्या विकासप्रक्रिया प्रचलति। अस्माकं भारतदेशेऽपि अस्य प्रविधेः विकासस्य प्रक्रिया आरम्भः अभवत् यद्यपि अधुना अस्मिन् दिशि प्रौद्योगिकी– बीजानि प्रस्फुटतानि सन्ति। कदाचित् शैशवास्था प्रचलिता अस्ति। अस्मिन् दिशि अधिकं कार्य करणीयम्।

अद्यावधि प्रचलितशिक्षा व्यवस्थायां ते एव अध्यापकाः, ते एव शिक्षणविधयः ते एव पाठ्यवस्तु, अस्ति। प्रचलितशिक्षायां नवीन मार्गाणां समाधिकाः इच्छा भवितव्यः। नवीनसिद्धान्तानाम् अध्ययनेन तथा शैक्षिकप्रविधिं कार्यान्वयेन शिक्षायां गुववत्तायाः विकासस्य लक्ष्यप्राप्तिं सम्भवं भवितुं शक्यते।

# "मेघदूतखण्डकाव्ये मनोवैज्ञानिकविमर्शः"

डॉ नगेन्द्रनाथझा
एसो.प्रोफेसर,
शिक्षाविभाग

मनोविज्ञानस्य विषये यदा वयं नेत्रोलोन्मील्य अवलोक्यामः तदानीं प्राप्नुमः यत् सर्वप्रथमं मनोविज्ञानम् आत्मनः विज्ञानम् आसीत्। (soul of science) तदनन्तरम् चेतनायाः विज्ञानं मनसः विज्ञानम्, अन्ते व्यवहारस्य विज्ञानमिति रूपेण मन्यन्ते स्म।

अतः एव ग्रन्थेऽस्मिन् मनोवैज्ञानिकतां पश्यामः तदानीं अस्माभिः प्रतीयते यत् कालिदासः आत्मचेतना–मन एवं व्यवहारं एतेषां चर्तुनाम् मनोविज्ञानस्य सामञ्जस्यं स्वकीयग्रन्थे प्रस्तुतवान् यथा–

कश्चित्कान्ताविरहगुरूणा[1] ........ अनेनश्लोकेन मेघदूतस्य उपोद्धात् कुर्वन् कविना कस्यापि यक्षस्य प्रमाणं स्थापितम्।

अस्य श्लोकस्य "अस्तङ्गमितमहिमा" इति शब्देव महाकवेः मनोवैज्ञानिकतायाः दर्शनं भवति। खण्डकाव्येऽस्मिन् यक्षस्य स्वकीय प्रियायाः प्रथकीभवनम् एका सामान्यवार्ता अस्ति परञ्च सामान्येषु अपि विशेषः कथं प्रतिपादितं यथा–

मानसिकस्थितीनां वर्णनं, तस्याः सुन्दरतायाः वर्णनं, तस्यः विरहस्यः वर्णनं तथा श्रापस्योपरान्त तस्य वास्तविकस्थितीनां वर्णनमेव कवेः मनोवैज्ञानितां दर्शयति।

तस्य स्थित्वा [2].......... अस्य श्लोक अर्न्तगत–अर्न्तवाष्पः तथा अन्यथावृत्तिचेतः शब्देषु अपि मानसिकस्थितेः वर्णनम् अस्ति। यतोहि कविना स्पष्टतया प्रतिपादितं मनोविज्ञानस्य ज्ञानं विना आन्तरिकभावनानां वर्णनं भवितुं न शक्नोति । इत्थं

इत्यौत्सुक्यात् परिगणयन् तथा प्रकृतिः कृपणाश्चेतनाचेतनेषु

इति शब्देषु अपि उत्सुक्ता–विचार–चेतन–अचेतन इत्यादिनां स्थितीनां वर्णनमस्ति। एवं प्रकारेण खण्डकाव्ये अस्मिन् वयं मनोवैज्ञानिकतायाः प्रमाणं पश्यामः।जातं वंशे भुवनविदिते[3]......प्रस्तुतपद्यस्य माध्यमेन कविः यक्षः (मेघस्य) मेघं स्तौति, तथा कविः याचतेऽपि विधिवशात् "अहमस्तित्वं गतः" आहोस्वित् समयस्य स्थितिं ज्ञापयन् अस्य आदरः सत्कारः वा अस्माभिः क्रियते।

---

1– कश्चित् कान्ता.......... पूर्वमेघ, श्लोक सं.1
2– तस्य स्थित्वा ........पूर्वमेध, श्लोक सं. 3
3– जातं वंशे भुवन विदिते...... पूर्व मेघ, श्लोक सं. 6

अतः तादृशी स्थितिं ज्ञातुं मनोवैज्ञानिता अपेक्ष्यते।
तां चावश्यं दिवसगणना[1]......... पद्येऽस्मिन् यक्षः मेघं स्वकीय भार्या जीवितम् इति वार्ता श्रावयितुं कथयति आहोस्वित् यक्षः मेघस्य मानसिकस्थितिं जानाति, यतोहि मेघः चिन्तयति स्म विरहवेदनायाः कारणात् तस्याः मृत्युः संजाता इति।

अतः एव अपरान् भावान् ज्ञात्वा तादृश्याः शब्दावल्याः प्रयोगमेव मनोवैज्ञानिकतायाः लक्षणं वर्तते।

उत्पश्यामिद्रुतमपिसखे[2] अस्मिन् पद्ये मेघः सन्देशं नीत्वा तस्य प्रियतमायाः निकटे प्राप्तवान्। परन्तु यक्षः स्वकीय दूरदर्शितायाः कारणात् मेघस्य स्थितिं जानाति यत् कुटजस्य पुष्पैः सुगन्धित प्रत्येकः पर्वतः भविष्यति तथा तेषु पर्वतेषु मेघः आनन्दं प्राप्स्यति, तस्मादेव कारणात् यक्षः मेघं तत्र गन्तुं प्रमृच्छति। तादृशे स्थले निर्देशनस्य स्थितिं मनोवैज्ञानिकतायाः प्रमाणमस्ति।

तेषां दिक्षुप्रथितविदिशा[3]....... अस्मिन् पद्ये (श्लोके) विदिशानामनः राजधानी, कामुकता, वेत्रवतीनदी तथा नारीणां भूप्रदेशस्य वर्णनं कृत्वा यक्षः मेघं प्रति किम् अभित्यक्तुं वाञ्छति।

अर्थात् मेघस्य मनोदशां जानन् यक्षः अल्कापुरी प्रति गन्तव्यस्य मार्गस्य विशदं वर्णयति, यक्षः मेघ प्रत्येकस्थानस्य स्थितिः एवं तत्रत्यः जनानां अभिलापः भावः प्रयत्नं विचारादिन् प्रकटयति।

तादृशं विशद वर्णनं विज्ञानमेव उच्यते यक्षः प्रत्येकपद्ये अल्कापुर्याः स्थितिं ज्ञापयन् मेघं कथयति–

विद्युतवन्तः ललितवनिता[4]...... इति उच्यते तथा मेघस्य एवं तत्रत्यानां स्त्रीणां समानतां कथयति, तत् कथनस्य मनोविज्ञानिककारणं इदमपि अस्ति यत् कोऽपि साधारणमानवः अपरिचिते समाजे गच्छति तदा तत्रस्थिति परिवेशात् आत्मानं पृथक् अनुभवति, तस्मिन् समये यदि तं सूच्यते तदा तस्मिन् समये सः समर्थः भवति तदनन्तरं यक्षः अल्कापुर्या स्वकीय आवालं तत्रागारं धनपतिग्रहाणामुत्तरेणास्मदीयम्[5]......... तथा

---

1– तां चावश्यं दिवसगणनां पूर्वमेघ, श्लोक सं.9

2– उत्पश्यामिद्रुतमपिसखे ........पूर्वमेध, श्लोक सं. 22

3– तेषां दिक्षुप्रथितविदिशा.... पूर्व मेघ, श्लोक सं. 24

4– विद्युतवन्तः ललितवनिता

5– धनपतिग्रहाणामुत्तरेणास्मदीयम

अन्येषां श्लोकानां माध्यमेन आवासस्य सम्पूर्ण विवरणं करोति येन मेघः कठिन्यं अनुभवेत्, इत्थं स्थितीनां सामजस्य अपि मनोविज्ञानस्य द्योतकं वर्तते।

महाकविकालिदासविरचितमेघदूते मनोवैज्ञानिकतायाः विशेषज्ञ तायाः प्रमाणम् उत्तरमेघस्य तन्वीश्यामातं जानीथा परिमितकथा जीवितं में द्वितीयम्[2]....... इत्यादीनां श्लोकानां माध्यमेन परिलक्षितं भवति इत्यादि श्लोकानां माध्यमेनैव यक्षः रामगिरिपर्वते स्थितऽपिस्वकीय प्रियतमायाः स्थितिं वर्णयति।

यतोहि यक्षः रामगिरिपर्वते तथा तस्य प्रियतमा अल्कापुर्यां स्थितेः अपि तां वर्णयति। तस्मिन् सन्दर्भे कवेः वाक् यक्षेण प्रकटिता भवति, तस्यां स्थितौ यक्षः सर्व जानाति अतः स्पष्टतया वक्तुं शक्यते महाकविकालिदासेन मेघदूते मनोवैज्ञानिकतायाः सुन्दरं परिचयं प्रदत्तम्–

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्[3]........

श्यामास्वङ्ग चकितहरिणी प्रेक्षनेदृष्टियातम् .............

एतेषु श्लोकेषु यंक्षस्य सन्देशः वर्तते तादृशेषु सन्देशेषु यक्षः तादृशी स्थितिं वक्तुं मेघं कथयति, यादृशी तस्य प्रियतमायाः कृते प्रियं भवेत्।

तस्य प्रमुखं कारणं इदमस्ति विरहकार्सेजपे सा सुखेन समयं यापयेत्, अतः एव तादृशैः प्रमाणैः सिद्धयति यत् मेघदूते मनोवैज्ञानिकतायाः समग्र उपयोगः कृतः इति।

**निष्कर्षः–** उपर्युक्त समीक्षाणामाधारेण वयं वक्तुं पारयामः यत् मनोविज्ञानम् मानवप्रकृतेः, मानवव्यवहारस्य, अनुभवस्य, सम्बन्धस्य, चेतनायाः मनसः, अन्तक्रियाणां तथा बाह्यक्रियाणां विषये अध्ययनं करोति।

यतोहि मनोविज्ञानं तादृशं तत्त्वं नास्ति यत् सर्वत्र द्रष्टुं शक्यते, परन्तु तत् सर्व खण्डितं कालिदासेन।

तेन विरचितं सप्तग्रन्थाः न केवलं साहित्ये परिपूर्णा अपितु मनोवैज्ञानिक तत्त्वैः परिपुष्टा वर्तते यथा–ऋतुसंहारस्य ऋतुणां वर्णनं, विक्रमोर्वशीय– अभिज्ञान–शाकुन्तल–मालविकाग्निमित्र नाटकेषु पात्राणां यथासमये व्यवस्थिति सुष्ठुचित्रणं, रघुवंश कुमार सम्भवे निश्चितसमये कल्पनायाः, मनोवैज्ञानिकतायायाश्च वर्णनं एवं च मेघदूत खण्डकाव्ये यक्षस्य मनः स्थिति, मेघं प्रति तस्य वाचा, प्रियतमायाः वर्णनं, यात्रायाः वृत्तान्तं महाकविकालिदासस्य मनोवैज्ञानिकतायाः द्योतकमस्ति।

अतः अन्ते स्पष्टतया वक्तुं शक्यते यादृश्यां उपमायां कविषु अग्रगण्यः शिरोमणि कालिदासः सर्वेषां मुखे विराजते। तेनैवधारेण तस्य विरचितग्रन्थेषु मनोवैज्ञानिकता अपि अवलोकयितुं शक्यते।

---

1– धनपतिग्रहाणामुत्तरेणास्मदीयम्, पूर्वमेघ

2– तन्वीश्यामातं ......., उत्तरमेघ, श्लोक सं. 22

3– शब्दाख्येयं यदपि ...... उत्तरमेघ, श्लोक सं. 43

# "शिक्षायाः अवधारणा"

डॉ विजयपालकछवाहः
असि. प्रोफेसर,
शिक्षाशास्त्र विभागः

मानवविकासस्य मुख्या सहायिका भवति शिक्षा। यया बालकस्य जन्मजातशक्तीनां विकासः सञ्जायते। एवञ्च ज्ञान–कला–कौशलेषु न केवलं वृद्धिः अपितु मनुष्यस्य व्यवहारे परिवर्तनमपि क्रियते। अत्र शंका समुदेति यत् विद्या शिक्षा वा का ? सन्दर्भेऽस्मिन् शास्त्रेषु बहुप्रमाणं लिखितमस्ति। आदिमयुगान्नतरं मानवस्य समक्षे यदा शिक्षायाः महत्वमागतं तदा आत्मनं शिक्षितकरणाय लक्ष्यं निश्चित्य एतस्याः अर्थः समुद्घाटितः। अस्माकं प्राचीनवाङ्गमये विषयेऽस्मिन् बहूक्तमस्ति। यथा– विद्ययामृतमश्नुते[1] सत्यं ज्ञानमनन्तं ब्रह्म"[2]।

साहित्य–संगीत कला विहीनः।
साक्षाद् पशु–पुुच्छ विषाणहीनः[3]।।

"विद्यया विन्दतेऽमृतम्"[4] इत्युक्त्वा शिक्षायाः सार्थकता आवश्यकता, उपयोगिता लक्ष्यं च निर्धारयति। एषा आत्मज्ञान–ब्रह्मज्ञान–बह्यज्ञान प्राप्तेश्च प्रक्रिया वर्तते। तथा "तमसो मा ज्योतिर्गमय"[5] इत्यस्याः उद्घोषमानाऽस्ति।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषागतिः।
छन्दो विर्चितिरन्वेष षडङ्को उच्यते।।[6]

वेदानामङगेषु शिक्षा एकमंङरूपेण स्वीक्रियते। शिक्षाशब्दः संस्कृतभाषायाः शिक्ष् धातोः निष्पन्नः यस्यार्थः ज्ञानोपार्जनं शिक्षणं च भवति । मानवः संसारेऽस्मिन् स्वानुभवेन सर्वदा यत्किञ्चित् शिक्षयति एव।

---

1– ई.उ. 11
2– तैः.उ.2/1/1
3– नीतिशतक परिशिष्ट–1
4– के.उ. 2/4
5– वृ.उ.1/3/28
6– अमरकोष 1/6/4

पाषाणयुगतः आरभ्य यन्त्रयुगतावत् एतस्याः उद्देश्यं कार्यं तत्वं क्षेत्रं च परिवर्तितं जातम्। आखेटकार्यतः कृषिकार्यतावत् अग्नेः आविष्कारतः आरभ्य चक्रस्याविष्कारतावत् यत्किमपि मानवः कृतं तत् सर्वं शिक्षया एव सम्पाद्यते। देश–काल–परिस्थित्यानुसारेण एषा परिवर्तिता जाता। विश्वस्य नैकेषु देशेषु एतस्याः स्वरूपं स्वध्येयानुसारं परिवर्तयति एव। यथा प्राचीनयूनाने शिक्षायाः उद्देश्यं नैतिकसामाजिकबौद्धिकश्च विकासः आसीत्। प्राचीनरोमे राज्यकल्याणम् अस्याः लक्ष्यमासीत्। मध्यकालीनयूरोपे शिक्षा मृत्योर्पश्चात् जीवनस्य सिद्धिरासीत्। आधुनिकयूरोपे शिक्षायाः उद्देश्येषु एतेषु न विश्वसति । भारते शरीरिकाध्यात्मिक मानसिकशक्तीनां विकासे बलमददात्। आंग्लभाषायां Education, इत्यस्य शब्दस्योत्पत्तिः लैटिनभाषायाः त्रिभ्यः शब्देभ्यः मन्यन्ते। यथा–

Education

एवं प्रकारेण शिक्षा इति शब्दस्यार्थः प्रशिक्षणं, संवर्द्धनं, पथ–प्रदर्शनं च भवति। उपयुर्क्तसर्वे अर्थाः शिक्षायाः क्रिया–प्रतिक्रियायाः संकुचित–व्यापकभेदाश्च प्रदर्शयन्ति। शिक्षायाः अपरार्थः Education, इति द्वाभ्यां शब्दाभ्यां निर्मितौ जातौ E+Duco; 'E' । इत्यस्यार्थः: आन्तरिकः 'Duco', शब्दस्यार्थः बहिर्नायनम्।

अतः अन्तःशक्तीनां क्षमतानां च बहिर्प्रकाशनमिति। शिक्षा आजीवनं प्रचल्यमाना प्रक्रिया अर्थात् जन्मतः आरभ्य मृत्युपर्यन्तं प्रचलति। या निरन्तर ज्ञानकौशलेषु वृद्धिना सह व्यवहारं परिवर्तयति। अवसरेऽस्मिन् नैके शिक्षाशास्त्रिणः स्वानुभवेन चिन्तनेन च शिक्षायाः परिभाषाः प्रकटिताः। यथा–

"यया मोक्षस्य प्राप्तिर्जायते सा शिक्षा" [8]

"या निर्वाणस्य प्राप्तो सहायिका भवति सा शिक्षा।"[9]

---

7– Meaning of Education

8– जैनदर्शन

9– बौद्धदर्शन

"मानवस्यात्मनि ज्ञानस्य निधिः वर्तते तेषामुद्घाटनमेव शिक्षा।"[10]

"उच्चतमशिक्षया केवलं सूचना न, अपितु अस्माकं जीवनस्य सर्वान् पक्षान् प्रभावयति।"[11]

"स्वस्थशरीरे स्वस्थमनसः निर्माणमेव शिक्षा।" [12]

"जीवनमेव शिक्षा।"[13]

"शिक्षया सुनैतिकचरित्रस्य विकासः क्रियते।"[14]

"नियन्त्रितवातावरणे मानवविकासस्य या प्रक्रिया सा शिक्षा।"[15]

यूनिवर्सल डिक्शनरी आफ इंग्लिश लैंग्वेज इत्यस्मिन् ग्रन्थे शिक्षायाः किं स्वरूपमिति 351 पृष्ठे उल्लिखितमस्ति। यथा– "पालनम् प्रशिक्षणम् विषयः, विकसितमस्तिष्कस्य प्रशिक्षणं चरित्रं, शक्त्यश्च, एवं शिक्षां भवति, विशेषरूपेण लघुबालकानां कृते प्रशिक्षणं निर्देशनमेव शिक्षा वर्तते। कस्मिन्नपि राज्ये प्रचलितनिर्देशनप्रणाली शिक्षा कथ्यते।।"

**शिक्षायाः वास्तविकस्वरूपम्–**

प्राचीनकाले शिक्षायाः लक्ष्यमासीत् चतुवर्गफलप्राप्तिः, अर्थात् धर्म अर्थ, काम, मोक्षस्य च प्राप्तिरीति। "सा विद्या या विमुक्तये" किन्तु साम्प्रतिकयुगे एषा अवधारणा भिन्नायते । यथा–"सा विद्या या नियुक्तयेः सा चार्थकरी विद्या" इति। अतः मानवस्य शिक्षा प्राप्त्यनन्तरं जीविकोपार्जनस्य समस्याः समाधानमवश्यमेव भवेत्। मानवो राजनीतिज्ञः अध्यापकः, अधिकारी, कर्मचारी, अभियन्ता, प्रशासकश्च भवेत्, किन्तु इतः पूर्वं तेषु मानवीयगुणानां योजनमवश्यमेव करणीयम्। तदा एव व्यक्तेः समाजस्य राष्ट्रस्य च कल्याणं भविष्यति। यथा गान्धीमहोदयेनोक्तं यत्– "बालके मनुष्ये च

---

10– स्वामीविवेकानन्द

11– रवीन्द्रनाथ टैगोर

12– अरस्तू

13– रूसो

14– हरबर्टस्पेन्सर

15– ट्रो

शारीरिकमानसिकाध्यात्मिक वृत्तीनाम्। उत्तमोत्तमसर्वाङ्गिकविकाससम्पादनमेव शिक्षेति।।"[16]

एवञ्च मानवेषु परस्परप्रेमभानायाः, सौहार्द, दया,परोपकारः, त्याग, लोकतन्त्रादिनां सद्गुणानां विकासेनैव वास्तविकीशिक्षा प्राप्यते। यथा भर्तृहरिणा नीतिशतके उक्तं यत्–

*"येषां न विद्या न तपो न दानं, ज्ञानं न शीलं न गुणो न धर्मः।*
*ते मृर्त्यलोके भुवि भारभूताः मनुष्यरूपेण मृगाश्चरन्ति"[17] ।।*

---

सन्दर्भग्रन्थसूची–


1– ईशादि नौ उपनिषद, शाङ्करभाष्यार्थ, गीताप्रेस गोरखपुर।
2– ईशादि नौ उपनिषद, शाङ्करभाष्यार्थ, गीताप्रेस गोरखपुर।
3– नीतिशतक परिशिष्ट,1, मूलचन्द्र पाठक, ज्ञान गंगा दिल्ली ।
4– ईशादि नौ उपनिषद, शाङ्करभाष्यार्थ, गीताप्रेस गोरखपुर।
5– बृहदारण्यकोपनिषद, शाङ्करभाष्यसहित, गीता प्रेस, गोरखपुर
6– अमरकोष, प्रो.सत्यदेव मिश्र, जगदीश संस्कृत पुस्तकालय, जयपुर
7– शिक्षा के सामान्य सिद्धान्त, पाठक एवं त्यागी, विनोद पुस्तक मन्दिर, आगरा।
8– भारतीय शिक्षा दर्शन, डॉ. रामशकल पाण्डेय, विनोद पुस्तक मन्दिर, आगरा
9– भारतीय शिक्षा दर्शन, डॉ. रामशकल पाण्डेय, विनोद पुस्तक मन्दिर, आगरा।
10– शिक्षा के सामान्य सिद्धान्त, पाठक एवं त्यागी, विनोद पुस्तक मन्दिर, आगरा
11– शिक्षा के सामान्य सिद्धान्त, पाठक एवं त्यागी, विनोद पुस्तक मन्दिर, आगरा
12– शिक्षा के सामान्य सिद्धान्त, पाठक एवं त्यागी, विनोद पुस्तक मन्दिर, आगरा
13– शिक्षा के सामान्य सिद्धान्त, पाठक एवं त्यागी, विनोद पुस्तक मन्दिर, आगरा
14– शैक्षिक प्रयोग एवं चिन्तन, लाल एवं पलोड़ आर लाल बुक डिपो, मेरठ
15– उच्च शिक्षा मनोविज्ञान एक परिचय, डॉ. आर.पी.पाठक, राधा पब्लिकेशन्स, नई दिल्ली
16– भारतीय शिक्षा शास्त्री, डॉ. रामशकल पाण्डेय, विनोद पुस्तक मन्दिर, आगरा।
17– नीतिशतक परिशिष्ट 2/1, मूल चन्द्र पाठक, ज्ञान गंगा दिल्ली

# "मीमांसायां पारिभाषिकी भावना"

डॉ सावित्री शतपथी
सहायक प्रोफेसर,
विभागाध्यक्ष, दर्शन विभाग

देशेदेश विदेशेऽपि सर्वक्षेत्रे सर्वकर्माणि च वेदकर्मकण्डोद्भवस्य महर्षि – जैमिनि प्रणीतस्य मीमांसाशास्त्रस्योपादेयताऽऽदरता चानुभूयत एव। करणीयं कर्म धर्म इति गायन्प्रगायन्ती मीमांसा कर्ममयं मानवजीवनं सुदृढं सुशृङ्खलितञ्च विदधातीति नास्तिलेशोऽपि सन्देहोऽत्र। युगेयुगे शास्त्रस्यास्य महत्त्वं वैशिष्ट्यञ्च इदानीमपि अक्षतं स्थास्यति सर्वकाले सर्वदेशे च । ज्ञातुमीच्छा जिज्ञासा यथा मातुमिच्छा मीमांसाऽपि विचारार्थकोऽस्ति । मान् धातोः सन् प्रत्यये णिजन्तस्त्रीलिङ्गे मीमांसा शब्दोऽयं निष्पद्यते । "पूजितविचारवचनो मीमांसा" इति शाबरभाष्ये उक्तमस्ति। वेदवाक्यानां विचारकंशास्त्रं सन्दिधार्थनिर्णायकं शास्त्रं मीमांसा इत्युच्यते।

पूर्वोत्तरभेदेन मीमांसेयं भागद्वयेन विभक्ता। वैदिककर्मकाण्डस्य विचारे जैमिनीयपूर्वमीमांसा, ज्ञानकाण्डस्य विचारे उत्तर मीमांसेति। मीमांसाद्वयी वेदस्यापैरुषेय चं नित्यत्वं स्वतः प्रामाण्यञ्चाङ्गीकारेण मानवसृष्टिवद् स्वीयानादित्वं प्रघटयति जगत्यस्मिन्। मन्त्रोपनिषद् भागोऽपेक्षाय ब्राह्मणभागस्य महत्त्वं गृहीत्वा तत्रस्थानां नियमानां सम्यङ् निर्देशनपूर्वकं वेदवाक्यानां समुच्चिता व्याख्या जैमिनीयमीमांसायामेव परिलक्ष्यते। अनेन सहकृतेनास्यां मीमांसायामपि प्रमाण–प्रामाण्य–प्रेमेयादीनां सुस्पष्टं सूक्ष्मविचारो सूत्रकारेण जैमिनिना महामुनिना भाष्यकारेण शवरस्यामिनाऽपि कृतः स्व–स्व सूक्ष्मबुद्ध्या–शुद्धविचारेण च। वैदिकविषयाणां साङ्गोपाङ्गविवेचनमस्याः मीमांसायाः चरमं परमञ्च लक्ष्यमिति शास्त्रस्यास्य अनुशीलनेनैव सम्यक् प्रतिभाति। नैतद् दार्शनिकतायाः परिचयोऽपितु अपरेभ्यो दर्शनेभ्योऽस्य पूर्वमीमांसादर्शनस्य श्रेष्ठत्वमवश्यं सिद्ध्यति अनेन। मानवधर्मरूपेयं मीमांसा यथा मानवसृष्टिरनादिरनन्ता च तथा अनादिरनन्तेति कथयितुं शक्यते। वेदार्थस्य यथार्थता प्रतिपादनायस्वयमेव भगवती श्रुतिरपि मीमांसायां प्रवर्तते। न केवलमत्र पैरोहित्यविद्याकर्मकाण्डव्याख्या वा प्रतिपाद्यते, अपि तु सम्यग् विचारं ज्ञाप्य देवत्वप्रदाने सहायिकारूपेण इयं जैमिनीयमीमांसा मानवसमाजस्य दिग्दर्शिका भवति। यथा वेदार्थनिर्णये तथैव धर्मशास्त्रेऽप्यस्याः परममहत्त्वं विद्यतव। विशेषतया जैमिनीयशास्त्रमेतद् न केवलमात्मनिर्भरतां शिक्षयति, अपि तु स्वकर्मणि विश्वासस्थापनं इष्टेषु सर्वसमर्पणभावञ्च सुष्ठु उपदिश्य सार्थकं भवति। विध्यपूर्वादीनां विचारे यथा शास्त्रस्यास्य महत्त्वमनुभूयते, तथा च भावनामीमांसायामपि दर्शनस्यास्य महद्वैशिष्ट्यं

परिलक्ष्यते। कीदृशीयं भावना? कुत ·अगता? कतिधा च सा? कुत्र कीदृशी समन्विता सा? इत्याद्यानां सर्वासा मीमांसानां सुस्पष्टया सुसूक्ष्मां विवेचनां महर्षिजैमिनिप्रणीते मीमांसाशास्त्रेव उपलभ्यते। तदत्र संक्षिप्य आलोचयिष्यामः। कर्ममीमांसा "यजेत स्वर्गकामः" इत्यादिवाक्यैः "यागादिरेव धर्मः" इति विधीयते स्वर्गादि फलमुद्दिश्येव। यागदानादिषु धर्मकर्मसु कथं प्रवर्तते मानवः तस्य विवेचनं शास्त्रे क्रियते जैमिमिना मुनिना। प्रवृत्तिं विना कर्मसम्पादनं नैव सम्भवति। विविधवाक्यात् कथं यज्ञादिधर्मः सम्पाद्यते, यागस्य विधानं विधिवाक्यात् कथं भवतीति जिज्ञासायामुत्तरयति मीमांसकः—"यजेत स्वर्गकामः" इति विधिवाक्यश्रवणानन्तरं स्वर्गफलैच्छुको व्यक्तिः यज्ञं कुर्यादिति बुद्ध्यते। विधिवाक्येनात्र "यजेत" इति लिङ् लकारपदे, यजिधातुः "त" प्रत्ययश्चाशद्वयं विद्यते। "यज्" इति धात्वंशेन यज्ञकर्ममात्रं बुद्धयते। "त" प्रत्ययेऽप्यस्त्यंशद्वयं लिङ्त्वम् अख्यातत्वं (लकारत्वं) चेति लिङ्लकारेआख्याततत्वधर्मः लिङत्वधर्मश्चोमय, यथा गोपिण्डे पशुत्वधर्मः, गोत्वधर्म श्वोभयंविद्यते। "यजेत" लिङ्लकाररूपमस्ति आत्मनेपदी—एकवचनमिति "त" प्रत्ययात्र विधिलिङ्ा प्रयुक्तः। "इकस्त्रिपौ धातुनिर्देशे" इत्यनेन यज्इक्—यज्धातुः यज्ञकरणं बोधयति। "यज्" धातुः उभयपदी सकर्मक भ्वादिगणान्तर्गतोऽस्ति ।

"यजेत" इति पदस्यार्थः यागं कुर्यात् इष्टं भावयेत् च। यज् धातुः यज्ञादि ध र्मकर्मणः बोधकः "त" प्रत्ययस्यार्थ भावनाऽस्ति, आख्याततत्वांशेनार्थी, लिङ्त्वांशेन च शाब्दीति उभयविधा भावना "त" प्रत्ययेनैवावबोध्यते।" भावनाशब्दोऽयं भूधातोः ल्युट्प्रत्यये णिजन्तस्त्रीलिङ्गे निष्पद्यते। भावना नाम प्रेरणाप्रवर्तनां प्रकृत्त्यनुष्ठानबोधकता प्रत्ययादेव ज्ञायते। यज्धातुना "त" प्रत्ययसंयोजनेन क्रियापदं यजेत" यागानुष्ठानं बोधयति।

भावना—भविता—भवनं—भावकादि सर्वे "भू" धातोः निष्पन्नाः परस्परसापेक्षिकाः शब्दाः। भाव्यतेऽनयेति भावना इत्यस्याः व्युत्पति। भविता येन प्रेर्यते सा भावना। भवितु—भवनानुकूल भावकव्यापारविशेष भावनेति भावना लक्षणमुक्तं ग्रन्थकारेण । भावयति इति भावयिता भावकः प्रेरकः प्रयोजकः प्रेरयिता इत्यस्यार्पर्यायाः, भवितुं यः प्रेरयति । भवतीति भविता, उत्पन्नभूतं द्रव्यं, यदुत्पद्यते। भवनमुत्पन्नम्। अर्थात्—भावयिता, भावक—प्रेरकः भावनया भवितारं भावयतीति भावनायाः भवनेनसह सम्बन्धादेवार्थप्रतीतिः। अर्थादुत्पादकः भावनाद्वारा उत्पन्नभूतं द्रव्यमुत्पत्त्यर्थं प्रेरयतीति। भाव्यते इति भविता। भवतीति भवनमित्यपि निर्वचनं कर्तु शक्यते। अर्थसंग्रहग्रन्थे "लौगाक्षीभाष्यकरेण भावनालक्षणं कृतं यत्—

"भवितुर्भवनाऽनुकूलः भावयितुर्व्यापारविशेषः भावनात्वमिति भावना सामान्यस्य लक्षणम्। आर्थी—शाब्दी उभयविधभावनयोः लक्षणमेतत् सगच्छते। पुरुषप्रवृत्यनुकूला या

भावना सा शब्दी, पुरुषप्रवृत्तिरूपा या साऽर्थी इति उभयभावनयोः भेदोऽयम्। अर्थात् पुरुष प्रवृत्यनुकूल भावयितुः व्यापारविशेषः शाब्दी। प्रयोजनेच्छाजनितक्रियाविषयव्यापारः आर्थी इति। तथाहि लौकिकवाक्ये शिक्षकः छात्रं प्रति कथयति–"पुस्तकमानय" इति शिक्षकस्य वचनंश्रवणानन्तरं छात्रस्य पुस्तकानयने प्रवृत्त्रिर्जायते। पुस्तकानयनकर्मणि छात्रस्य या प्रवृत्तिः, यया प्रवृत्या छात्रः पुस्तकानयनकर्मसम्पादयति, गुरोरादेशपालनरूपं फलञ्च प्राप्नोति। अर्थात् कर्मकरोति कर्मफलञ्च भुङ्कते तत्रार्थीभावना प्रवृतिरूपेति।

लक्षणमनुसृत्य–भवितुःजायमानस्योत्पद्यमानस्य पुस्तकानयनशिक्षकादेशपालन–रूपकर्मणः भवनानुकूलो सहायकभूतपुस्तकानयनकर्मणि प्रवृत्तिरूपव्यापारविशेषः अभिप्रायविशेष–मानसिकक्रियाविशेषः छात्रैव आर्थीभावना । तद्वद् "यजेत स्वर्गकामः इति वैदिकवाक्यश्रावणानन्तारं स्वर्गकामपुरुषः यागानुष्ठाने प्रवर्तते। तत्र भवितु उत्पद्यमानस्य जायमानस्य वा यागादि धर्मकर्मणः भवनानुकूल सहायकभूत कारणभूतः यागादिधर्मानुष्ठाने प्रवतिरूपव्यापारविशेषःक्रियाविशेषाभिप्रायविशेषः वाऽर्थीभावनेत्युच्यते, स्वर्गकामपुरुषव।

इयं प्रवृत्तिः शाब्दीभावनायाः साध्यं फलं वा भवति। शब्दीभावनायां तु "पुस्तकमानय" इति शिक्षकवचनश्रवणादेवच्छात्रस्य पुस्तकानयनकर्मणि प्रवृत्तिरुत्पतेः भवनानुकूलकारणभूतः भावयितुः उत्पादयितुरुत्पाद्यमानस्य प्रेरकस्य वा प्रेरणात्मकादेशरूपव्यापारविशेष अभिप्रायविशेषः, शिक्षकैव शाब्दी भावना । लौकिकवाक्ये च्छात्रेऽर्थी भावना, शिक्षके च शाब्दी इति सुस्थिता। "यजेतस्वर्गकाम" इति वैदिक वाक्ये तु कर्मकर्त्ता फलभोक्ता च स्वर्गकामः यजमानः किन्तु उपदेष्टापुरुषाभावाद प्रेरकेषुलिङ्तव्यानीयादिषु शाब्दीभावना स्वक्रियते वेदस्यापैरुषेयत्वात्। भवितुर्जायमानस्य स्वर्गकामपुरुषस्य यागादिधर्मषु प्रवृतिरुत्पत्तेः भावनानुकूलो कारणभूतःसहायकभूतः प्रवृत्त्युत्पाद्यमानस्य प्रयोजकस्यप्रेरकस्य "त" प्रत्यये स्थितस्य लिङ्त्वांशस्य प्रेरणात्मकव्यापारविशेषोऽभिप्रायविशेष प्रयन्तविशेषो सा शाब्दीभावना कथ्यते। ततः भावना नाम भवितुः उत्पद्यमानस्य भवनाकूलो उत्पतेः कारणभूतः भावयितुः भावकस्य प्ररेकस्य प्रयोजकस्य व्यापारविशेषः मानसिकक्रियाविशेषः उन्मुखताभावः इति। वस्तुतः समग्रवेदः शाब्दभावनारूप एव। ग्रन्थोक्तं "तत्र पुरुषप्रवृत्यनुकूलभावकव्यापारविशेषः शाब्दीभावना, तत्प्रसङ्गे तत्सम्बन्धे च मीमांसायामेव सर्वेषां पदार्थानां विवेचनं प्रस्तूयते" इति। विधि–मन्त्र नामधेयः निषेधार्थवादेष्वन्तिम भागमर्थवादं शाब्दीभावनायारितिकर्त्तव्यता रूपेण अन्वयं क्रियते ग्रन्थकारेण, पुनरप्यन्ते सुनिगदितमस्तिग्रन्थे–"तत्सिद्धं वक्ष्यमाणार्थभावना भाव्यिका लिङ्दि ज्ञानकरणिका प्राशस्त्यज्ञानमितिकर्तव्यताकाशाब्दीभावना लिङ्त्वांशेनोच्यते" इति। लिङ्प्रत्ययार्थः शाब्दीभावनेति। अतः उक्तं लिङ्श्रवणे, अयं मां प्रवर्तयति मत्प्रवत्त्यनुकूलव्यापारवानयंलिङ् , इति नियमेन

प्रतीयमानत्वात्" इत्यादिभिः वचनैः सुष्ठुतया सारल्येन चाववोधः भवति। "विधिवोधकलिङ्गाद्यर्थः प्रेरणाप्रवर्तनावेति" केचित् वदन्ति। अन्ये तु इष्टसाधनत्व विध्यर्थलिङ्गर्थः इति। उक्तं सारविवेचिन्यां "इष्टसाधनताऽतिरिक्तः प्रवर्तनाख्यो अलैकिक कश्चिद्धर्मविशेष लिंङ्दिवाच्य इति भट्टसोमेश्वरः खण्डदेवप्रभृतयश्चेति। अतएव लिङ्र्थः इष्टसाधनत्वमुववोधयंति किन्तु व्यापारविशेष एव लिङ्र्थः। यथोक्तं "स च प्रवृत्यनुकूल व्यापारविशेष लोके पुरुषनिष्ठोऽभिप्रायविशेषः, वेदे तु पुरुषाभावाल्लिङ्गादि शब्दनिष्ठ एव" इति।

लौकिकवाक्ये लिङ्श्रवणात् यथा प्रवर्तनासामान्यं प्रतीयते तथा वैदिक लिङ् श्रवणादपि प्रवर्तनासामान्यं प्रतींतिर्भवति। तथापि लौकिंकवैदिकलिङ्गप्रत्यययोः परस्परं भदोऽस्ति। लौकिकेशब्दे प्रवर्तनारूपव्यापारः न भवति, अपि तु पुरुषनिष्ठोऽस्ति । वेदेतु शब्दनिष्टैव। तस्मात् शब्दनिष्ठप्रवर्त्तनाव्यापारंशाब्दीभावना लिङादिप्रत्ययर्थोऽस्ति। तस्मादुच्यते भट्टाचार्येण—"तन्त्रवार्तिके (2/1/9) "अभिंधाभावनांमाहुरन्यामेवलिङ्गादयः" इति । शाब्दीभावनामाभिधा भावनाऽपि कथ्यते।" अभिंधीयते अनया इतिअभिधा" येनाभिधानं क्रियते। अभिधा शब्देनाऽपि विधिकथनं भवति। तस्य विधेः व्यापारोऽस्ति भावना। इयञ्च भावाना लिङादि शब्दस्यवाच्यार्थेऽस्ति। प्रवृत्तिजनकव्यापारोऽस्ति प्रवर्तना, परन्तु इष्टसाधनत्वं ज्ञाते सति व्यक्तिः प्रवर्तते। अर्थात् श्रोतापुरुषे प्रयोज्यपुरुषोः प्रवृत्त्यनुकूलमिष्टसाधनत्वं प्रयोजकपुरुषे ज्ञात्वा वुद्ध्वा च प्ररितोभवति। इष्टसाधननाज्ञानाभावे तु न कर्मणि प्रवर्त्तते। प्रवर्त्तनारूपा भावना प्रसंगे पार्थसारथिमिश्र सोमेश्वरमतयोरत्यन्तभेदः परिलक्ष्यते। पार्थसारथि इष्टसाधनात्वमेव प्रवर्त्तना रूपेण लिङ्र्थः सोमेश्वरमते तु लिङ्गार्थो इष्टसाधनत्वातिरिक्तप्रवर्त्तनासञ्ज्ञकेऽलेकिकधर्मविशेषः। उक्तञ्च इष्टसाधनत्वमेव प्रवर्त्तता रूपेण लिङ्र्थ इति पार्थसारथिमिश्रप्रभृत्तय इति । "इष्टसाधत्वातिरिक्तः प्रवर्त्तनाख्योऽलौकिकः कश्यिचद्धर्मविशेषलिङादिवाच्य इति भाट्टसोमेश्वरः खण्डदेवप्रभृतयः" इति।

यत्र यदा च प्रयोज्यपुरुषः प्रयोजकपुरुषस्य वाक्यं श्रवणमात्रेण इष्टसाधनताज्ञानाभावेऽपि प्रवर्तते कर्मणि तत्र इष्टसाधनत्वस्य आक्षेपः क्रियते। पुरुषः"यदासन्ध्योपासनं कुरुत इति ज्येष्ठस्याज्ञां प्राप्य प्रवर्त्तत तदा गुरुजननिष्ठाप्रेरणाया आक्षेपं भविष्यति यत् "संध्योपासनादि ममेष्टसाधनमिति"। यतः गुरुजनादि स्वभावतः हितकारी। उक्तम्—"माता—पिता गुरुश्चेति स्वभावतः त्रितयं हितम्" इति इत्थं पार्थसारथिमिश्रस्य मतं लोकव्यवहारसिद्धं मानवप्रकृतिसिद्धञ्चेति। अभिधीयते या सा अभिधा अर्थात् समीहितसाधनाता इष्टसाधनता प्रर्वतनारूपेणाभिहिता यदा भवति तदा पुरूषे प्रवृत्तिमुत्पादयति नाम भावयतीत्यतोऽस्याः नाम भावना। सा भावना लिङादि कथ्यते। तदुक्तम्—" सैव प्रवर्तनात्वेनाभिहिता पुरुषप्रवृतिं भावयतीति भावना, तां

भावनां लिडादयः आहुः" इति। "प्रवृतिहेतुं धर्म "च प्रवदन्ति पवर्तनाम्" इति कारिका द्वारेणैव सम्यक् विवेचनं क्रियते "लिङ्" इत्यंशस्य एव।

आख्यातत्वांशेनार्थीभावना उच्यते। अर्थात् स्वर्गादि फलेच्छाजनितो यागविषये प्रयन्तः, साऽर्थीभावना। कर्मसु प्रयन्तविशेष एव आर्थीभावना। प्रयन्तातिरिक्तार्थीभावना तु नैव शक्यते। "यजेत" इति आख्यातश्रवणे "यागेयतेत" इति प्रतीतिर्जायते पुरुषस्य । यागेन फलं कुर्यात्—सम्पादयेत इत्यर्थं बुद्धवा पुरुषः यागं करोति। सर्वेषु लौकिककर्मसु "पचति—गच्छति" अर्थात् पाकं करोति गमनं करोति इत्यादिषु प्रयन्तरूपेणैवाख्यातबोध यते। उक्तं मीमांसा न्यायप्रकाशे "अतश्च करोति सामानाधिकरण्यात् प्रयन्तस्याख्यातवाच्यत्वमिति"। करोति इत्यस्यार्थोऽस्ति प्रयन्त एव । प्रयन्तश्चाख्यातं विना न सिद्धयति। अतः प्रयन्तबोधिका भावना एवार्थीभावना शाब्दीभावनायाः साध यरूपेण सिदयति। भावनेयमंशत्रयविशिष्टा। उक्तमीमांसान्यायप्रकाशे "सा च भावनांशत्रयमपेक्षते, साध्यं साधनमितिकर्तव्यतां चेति। किम्भावयेदिति साध्याकांक्षा केन भावयेदिति साधनाकांक्षा, कथं भावयेदिति इतिकर्तव्यताकांक्षा संजायते उभयत्र भावनायाम्।

शाब्दीभावनायाः साध्यं किमित्याकाक्षायां साध्यसाधनेतिकर्तव्यता अंशत्रयविशिष्टा आर्थभावना एव साध्यत्वेन सम्वन्धते। अंगकर्मभिः सह मुख्ययागसम्प्रादनं कृत्वा स्वर्गफलस्यप्राप्तिकरणमेव शाब्दीभावनायाः साध्यमिति बोध्यते।

केनं साधयेत् इति अर्थात् वैदिकवाक्यानामर्थबोधः केन प्रकारेण भविष्यितीति आकांक्षायां लिङ्तव्यानीयादि व्याकरणजनितं ज्ञानं साधनत्वेन करणत्वेन वा शाब्दभावनायां सम्वध्यते। तदुक्तं "लिङ्गादिज्ञानं हि शाब्दभावनाभाव्यर्थीभावनां निर्वर्तयति, कुठार इवच्छदनम्। अतो लिङदिज्ञानस्य करात्वेनान्वयः।" शाब्दीभावनायाः इतिकर्तव्यत्वंकिमितिकथंभावाकांक्षायां वेदस्यार्थवादांश बोध्य प्राशस्त्यज्ञानमितिकर्तव्यतारूपेणान्वेति शाब्दभावनायामेव । एवं व्याकरणादि ज्ञानयुक्तः व्युत्पतिमान् पुरुषो "स्वाध्यायोऽध्येतव्यः" यजेत स्वर्गकामः" "वायव्यं श्वेतमालमेत्" इत्यादिवाकयानामर्थं बुद्धवा "वायुर्वेक्षेपिष्ठादेवता" इत्यादि अर्थवादवाक्यैः सम्यक् प्रवृत्तिमुत्पाद्य यागदीन् स्वकर्त्तव्यमिति अववोध्य यागनुष्ठानं कुर्यादिति शाब्दभावनायाः अर्थवोधः। आर्थीभावनायान्तु साध्यकाक्षायां "यजेत" इति समानापदे विद्यमानः धात्वर्थः कष्टात्मकत्मकयायागः साध्यत्वेन अत्रार्थीभावनायमन्वेति। "स्वर्गकामः" इति भिन्नपदे स्थितः सुखात्मकोसर्वाभिलाषितश्चस्वर्गः साध्यत्वेनान्वयं भवति। केन स्वर्ग भावयेत् इति साधनाकांक्षायां यागः करणत्वेनन्वेति इतिकर्तव्यातांकांक्षायां सर्वेपूर्वापरङ्गयागाः इतिकर्तव्यतात्वेनान्वेति। अर्थात् कथं योगेन स्वर्ग सम्पादयेदिति कथभावाकांक्षाकृते सति पूर्वापराङ्गयागैः सह मुख्ययाग सम्पाद्य स्वर्गादिफलं साधयेदिति आर्थीभावनायाः

साध्यादित्रिविधाकांक्षाणां शमनं सम्यक् भवति।

एकैकशलौकिककर्मणि वैदिके कर्मण्यपि उमयविधभावनयोः महत्सहयोगमन्तर्हितं विद्यते इति स्थूलसूक्ष्मतया अनुभूयतैव। तद्विना वाक्यानामर्थबोधः नैव सम्भवति, कर्मानुष्ठानस्य का कथा? भावनेयं मीमांसा दर्शनस्य प्रमुखसिद्धान्तोऽस्ति। जैमिनीय दर्शनस्य मूलाश्रयीत्वेन भावनासिद्धान्तोऽयमङ्गीक्रियते शास्त्रकारैः। न केवलं दर्शनक्षेत्रे भावना व्याप्नोत्यपितु व्याकरणमनोविज्ञानभाषाविज्ञानादिक्षेत्रेषु गमीरतया स्पशति । ज्ञानविज्ञानक्षेत्रे च भावना सिद्धान्तस्य मीमांसकानां महदवदानमिदानीमपि रूचिकरं प्रतीयते। भावनायाः महता न केवलं शास्त्रजगत्यपितु व्यावहारिकक्षेत्रेष्वपि अस्याः महत्युपयोगिताऽनुभूयतैव। भावनामीमांसेयं ज्ञानिनामज्ञानिनामपि साक्षात् परम्परया च कर्ममयंजीवनं प्रभावितं कुर्वन् कर्ममीमांसां परिस्करोति परिवर्द्धयति सम्वृद्धयति च नास्ति लेशोऽपिअवकाशः संशयस्य कुत्रचित् कदाचित् कथञ्चिदपीति सम्।

---


सन्दर्भग्रन्थसूची –

1– मी.न्या.प्र.वि.सं.4

2– सा.प्र.भा. पृ.179

3– मी.न्या.प्र. 4–7

4– वि.स..947 मी.न्या.प्र.

5– मी.न्या.प्र.वि.सं.4

6– सारविवेचिनी पृष्ठ 179 पाद टिप्पणी क्रमसंख्या 13

7– सारविवेचिनी पादटिप्पणी क्रम संख्या 14 पृ.179

8– विभाग संख्या, 4

9– मी.व्या.प्र.पृ.145

10– मी.न्या.प्र.विभागसंख्या, 5

12– मी.न्या.प्रत्रअर्थवादप्रकरणे।

# "व्याकरणपदार्थः"

डॉ सच्चिदानन्द शर्मा
सहायक प्रोफेसर,
व्याकरण विभाग

अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः? सूत्रमिति भाष्ये उक्तम् –तत्र व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्। न हि शब्देन किञ्चित् व्याक्रियते एवं तर्हि "लक्ष्य लक्षणे व्याकरणम्"[1]। शब्दो लक्ष्यः, सूत्रं लक्षणमिति व्याकरणपदार्थः।

अस्मिन् सारे खलु संसारे को विद्वान् न विजानति यद् धमार्थकाममोक्षाख्य पुरुषार्थचतुष्टयावाप्तये द्विजातिभिः साङ्गवेदाध्ययनमवश्यं विधेयम्। तदुक्तम्–

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति"[2]। स्मृतिरपि–

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वादाशु गच्छति सान्वयः। शिक्षायामुक्तम्[3]–
छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते।।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।

भास्कराचार्येणापि स्वग्रन्थे न्यवेदयत्–

यो वेद वेदवदनं सदनं हि सम्यक्–
ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम्।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरेषु भवति श्रवणेऽधिकारी।।

अतो हि प्रथममेतदधीत्य धीमान् शास्त्रान्तरेषु श्रवणेऽधिकारी भवति। यथा मुखं विना शरीरसंरक्षणमसम्भवं तथैव व्याकरणान्तरेण शास्त्रान्तरेषु प्रवेशो दुर्लभमिति।

भाष्यकारेणाप्युक्तम् – "प्रधानं च षडङ्गेषु व्याकरणम्"[5] प्रधाने च कृतो यत्नः फलवान् भवति। सत्स्वेतेषु बहुषु व्याकरणेषु अन्यतमस्य यस्य कस्य न वेदाङ्गत्वम्। सर्वलौकिकालौकिकशब्दव्युत्पादकस्य पाणिनीय व्याकरणस्यैव वेदाङ्गत्वाभ्युपगमः स्यात्। व्याकरणान्तरेषु सर्वेषां लौकिकालौकिकशब्दानां न व्युत्पादनम् । "इत्यक्षरं समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय , इन्द्रो भारद्वाजाय, भारद्वाज ऋषिभ्यः ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते। न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिः"[6] इति चतुर्दशसूत्रकदम्बकस्याम्नायत्वमुररी [illegible] मूलकत्वादस्यैव व्याकरणस्य वेदाङ्गत्वं सुस्पष्टमेव। तत्पूर्वम्–

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्–
सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।

नव्यव्याकरणेषु प्रधानं पणिनीयव्याकरणम्। महर्षि पाणिनिना महताऽऽराधेन महेश्वरं सन्तोष्य ततो व्याकरणं लब्धम्। तदुक्तम्–

पाणिनीयं महाशस्त्रं पदसाधुत्वलक्षणम्–
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चनेति[7]।।

अथ च "कणादं पाणिनीयं च सर्वशास्त्रोपकारकम्"

अन्यदुक्तम्[8]–

तीव्रेण तपसा तोषितादिन्दुशेखरात्।
सर्वविद्या प्रमुखत्वं तेन प्राप्तं व्याकरणं नवम्।।

भर्तृहरिणाप्युक्तम्[9]–

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमः तपः।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः।।
यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।
तद्व्याकरणमागम्य परं ब्रह्माभिधीयते [10]।।

शब्दसाधुत्वज्ञानार्थमध्येयं व्याकरणम्। अत एव अनुशिष्यन्ते असाधुभ्यो विविच्य ज्ञाप्यन्ते शब्दाऽनेन, शब्दानुशासनमिति व्याकरणापरपर्यायं भाष्यकारो दर्शितवान्। एवञ्च व्याकरणाध्ययनस्य मुख्यं प्रयोजनं शब्दसाधुत्वज्ञानम्।

प्रयोजन प्रयोजनानि– रक्षोहागमलध्वसन्देहाः। गौणप्रयोजनानि–तेऽसुराः[11] दुष्टः शब्दः, यदधीतम्, यस्तु प्रयुङक्ते, अविद्वांसः, विभक्तिं कुर्वन्ति, यो वा इमाम्, चत्वारि, उत त्वः, सक्तुमिव, सरस्वतीम् , दशम्यां पुत्रस्य, सुदेवोऽसि वरुण इति त्रयोदश।

ननु तेऽसुराः इत्यादीनां बहुत्वात् बहूनामनुग्रहो न्याय्य इति सिद्धान्तात् प्रथमतोऽभिधानं युक्तमत आह पदपदार्थज्ञानाधीनत्वेनान्तरङ्गत्वात् वेदरक्षादीनां प्रधानत्वादेव तेषां प्रथमतोऽमिधानमिति भावः। तेऽसुराः इत्यादीनां बहिरङ्गशब्दप्रयोगविधिनिषेधविषयत्वात् आनुषङ्गिकत्वात् पश्चात् कथनम्।

येनोच्चारितेन, अथवा प्रतीत पदार्थक इति शब्दलक्षणद्वये को विशेषः? उच्चारित प्रध्वंसित्वेन वर्णानां यौगपद्यासम्भवात् वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वम्। अभिव्यक्तिपक्षे क्रमेणैवाभिव्यक्त्या समुदायासम्भवात् एकस्मृत्युपारुढानां वाचकत्वे सरो रसः इत्यादौ अर्थप्रतीतिवैलक्षण्यानुपपत्तिः, तस्मादिदमेकं पदम् इदमेकं वाक्यमिति प्रतीतिः एकः स्फोटो वाचकः। अत एव येन स्फोटेन उच्चारितेन प्रकाशितेनेत्यर्थः। येनेत्येकवचेन विषाणिनामिति बहुवचनेनानेकोच्चारणविषयगौरित्यस्यैयकत्वं बोधितम्।

ध्वनिस्फोटयोर्भेदस्य वाक्यपदीये निरुपणात् अर्थात् प्राकृतोध्वनिः स्फोट व्यञ्जकः स्फोटो व्यङ्गयः—

स्फोटस्य ग्रहणे हेतुः, प्राकृतो ध्वनिरिष्यते।
वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते।।[12]

इति भेदे सत्त्वेऽपि भाष्येऽभेदेन व्यवहारेऽपि न दोषः। द्रव्यादीनां शब्दवाच्यत्वाभावात्। लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धिः, श्रोत्रेन्द्रियग्राह्यत्वात् वर्णरूपध्वनिसमूह एव शब्दः। एतादृशरूपाऽविचारितरमणीयस्य शास्त्रेणान्वाख्यानात् अर्थबोधकताऽप्यस्य तथैवेति भावः।

---

1— महाभाष्य प्र.आह्निक

2— महाभाष्य प्र.आह्निक पा.अ., प्रथम प्रयोजन

3— पाणिनीयशिक्षा, श्लोक 41,42

4— भास्कराचार्य, ज्योतिष

5— महाभाष्य । म.आह्निक

6— ऋक्तन्त्रव्याकरण।

7— पारावार ग्रन्थः

8— कथासरित सागर

9— वाक्यपदीयम् प्रथम काण्ड, श्लोक 11

10— वाक्यपदीयम्, प्रथमकाण्ड, श्लोक, 22

11— महाभाष्य प्र.आ. व्याकरणाध्ययन मुख्यगौण प्रयोजन।

12— परमलघुमंजूषा, स्फोटनिरूपणे आचार्य हरेः कारिका।

# त्रिस्कन्धज्योतिषशास्त्रस्य उपादेयत्वम्

डॉ राम दास शर्मा
सहायक प्रोफेसर,
ज्योतिष विभाग

तत्र ज्योतिषां ग्रहर्क्षाणां गतिस्थित्याधारेण कृतं शास्त्रं ज्योतिषम्। ज्योतिषशब्दात् द्युत्दीप्तौ इत्यस्मात् "द्युतेरिसिन् नादेश्च जः"[1] इत्यौणादिकाद् धात्वादेः दकारस्य लकारे इसिन् प्रत्यये लघूपधगुणे च ज्योतिस् इति साधुः।

ज्योतीषि ग्रहनक्षत्रतारकादीनि ज्योतिषपिण्डानि "अधिकृत्य कृते ग्रन्थे"[2] इत्यण् तद्धितेष्व चामादेः" इत्यादिवृद्धौ ज्यौतिषमिति निष्पद्यते। अत्र केचन भारतीयविद्वांसः भारतीयसंस्कृतवाङ्मये सर्वत्र ज्योतिषशब्दस्यैव प्राधान्यात "अर्श आदिभ्योऽच्" इति ज्योतिषशब्दादचि प्रत्यये सति ज्योतिषमित्यङ्गीकुर्वन्ति। एतदतिरिक्तं ज्योतिषरत्नमालायां नामपरीक्षणक्षणे ज्योतिषशास्त्रतत्त्वज्ञैः अस्मत्गुरुवर्यैः प्रातः स्मरणीय पण्डित श्रीबिहारिलालशास्त्रिवर्यैः जि–अभिजित्, ओ–अश्विनी, ति–तिष्य, स्–स्वाती, इति–चतुर्ष्णामपि नाभसनक्षत्रद्योतक–स्तम्भानां वर्णनं सप्रमाणं समुपन्यस्तम्[3]।

यज्ञानामनुष्ठानाय कालनिर्धारणनस्य द्योतनायैव ज्योतिषशास्त्रस्य प्रवृत्तिरभूत्[4]।

तत्र यज्ञानां वेदिका गृहनिर्माणादौ दिग्देशकालानां निर्धारणार्थं सूर्याचन्द्रमसोः नक्षत्रैः सह आकाशीयस्थितिज्ञानमन्तरा अन्यत्साधनजातं नासीदित्याकलय्य प्राक्तनैः तत्त्वदर्शिभिः वसिष्ठादिमहर्षिभिः वेदभगवतो मूर्धन्यचक्षुरिति प्रधानमङ्गं ज्योतिषमेवाङ्गीकृतम्। यद्यप्यन्येषामङ्गानां वेदाध्ययनाध्यापनादौ सार्थकत्वमास्ते। परञ्चाकाशीयग्रहनक्षत्राणां गतिविधिज्ञानाय वेदाङ्गभूतानामपि व्याकरणादीनां शास्त्राणामीषदपि सामर्थ्यं न विद्यते। अपितु समस्तान्यप्यन्यशास्त्राणि ज्योतिषमुपजीव्यैव स्वीयां प्रतिष्ठां जगति स्थापयितुं प्रभवन्ति। ज्योतिषस्य वेदचक्षुष्ट्व दिव्यदृष्टिमत्वञ्च सूर्यादिग्रहगणितद्वारा पञ्चाङ्ग कलनादिव्यापारैः स्वतः सिद्धमास्ते। यतो हि नितरामदृष्टेऽपि दविष्ठे नभसि जायमानानां ग्रहाणां नक्षत्रयोगः सूर्यचन्द्रयोर्ग्रहणम् सूर्यमण्डले वलङ्कप्रयोगादिचन्द्र श्रृङ्गेन्नतिप्रभृतीनां कदा समभवः? इत्यादि विचित्रनाभसविषयाणां मानं ज्योतिषविद्वद्भिरेव प्रत्यक्षीकर्त्तुं पारयतीत्यतो

---

1–सि.कौ.तत्त्वबोधिनी टीका कृदन्ते उणादयः सूत्रसंख्या 4470 पृ.सं.614

2–पा.अ.सूत्रसंख्या 4/3/87

3–ज्योतिषरत्नमाला सम्पादक–डॉ.बिहारिलालशास्त्री पृ.सं.10

4–वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।। वेदाङ्गज्यो.श्लो. सं.3

ज्योतिः सिद्धान्तविद् यद्यपि युक्तयोगीवातीन्द्रियान् विषयान् ध्यानमात्रेणैव लोचनीकर्त्तुं न प्रभवति तथापि तानेवादृश्यविषयान् गणितबलेन सर्वसाधारणजनस्य पुरस्तात् प्रत्यक्षीकरणे न ज्योतिर्विद् सुज्जानयोगिनां कोटौ सर्वप्रथमो गणयितुं शक्यते। वेदादिशास्त्राणां विषये चैका शास्त्रोक्तिः प्रसिद्धाऽऽस्ते तद्यथा–

ज्ञानानन्तरभावियच्च हि फलं ज्ञाताक्रियातश्च यत्।
सर्वस्याव्यभिचारिकारणमिति ज्ञानस्थितौ निश्चयः।
ज्ञेयं चापरिमेयमल्पविषयं श्रौतादिशास्त्र पुनः।
दिव्यं चक्षुरतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित्।।

एषोक्तिः वैदिकचक्षुष्ट्वीभूतज्योतिषविषयेऽप्यक्षरशः संघटते। यतोहि ज्योतिषमेतत्सर्व– साधारणैरप्युपकरणैः सार्वभौमशुभाशुभपरिणामान् समादेष्टुं शक्नोति। अतो ज्योतिषं न त्वेकदेशीयमपितु विश्वव्यापिनीं प्रतिष्ठां लभते[1]।

ज्योतिषस्य शास्त्रवसिद्धिः–

निरीक्षणपरीक्षणाभ्यां न्यायकुसुमाञ्जलिकारेण उदयनाचार्येण शास्त्रस्य परिभाषा एवं प्रत्यपादि–

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते"।।

नित्यत्वन्तु वेदानामपौरुषेयत्वात् प्रसिद्धमेव, मानवप्रणीतत्वाद् रामायण–महाभारतपुराणादीनामपि कृतकत्वं स्वयमेव सेत्स्यति। अत्र नित्यत्वकृतकत्वयो– रूमयोरपि सामाजिकानां शुभकर्मसु प्रवर्तनम् अशुभकर्मभ्यश्च विनिवर्तनं येन केनाप्युपायेन उपदिश्यते तदेव शास्त्रमित्युच्यते।

उक्तपरिभाषामनुशीलयते चत्, सिध्यति यच्छुभाशुभफलाधायककालदेशविशेषेण ज्योतिषशास्त्रमपि सामाजिकान् मानवान् सर्वथा शुभकृत्येषु प्रवर्तयितुमशुभकृत्येभ्यश्च निवर्तयितुमुपदेशप्रवणत्वात् प्रभुसम्मितकोटाविव विनिवेष्टुं शक्यते।

यतो हि शास्त्रं त्रैविध्यमृच्छति प्रभुसम्मितम्, सुहृत्सम्मितम्, कान्तासम्मितत्वञ्चेति। तत्र वेदादिशास्त्रजातस्य प्रभुसम्मितत्वम् इतिहासपुराणादीनां सुहृत्सम्मितत्वम्, सरसपादनवैशिष्ट्यादलङ्कारशास्त्रस्य कान्तासम्मितत्वञ्च जगत्प्रसिद्धम्।

साक्षाद्भगवतो ज्योतिः स्वरूपिणो वेदस्य शुभकृत्यप्रवृत्तावशुभकृत्यनिवृत्तौ च नित्यमादेशपरायणत्वादस्य ज्योतिषशास्त्रस्य निबधिं प्रभुसम्मितत्वं प्रसेत्स्यति। तद्यथा–

"ज्योत्स्नारत्नप्रदीपस्य वात्ययाऽपि न शाम्यति।
न हि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते।।"

तस्य प्रतीतिस्तु दूरातिदूरप्रसरक्षण एव सर्वैरनुसूयते। एवमस्य ज्योतिशशास्त्र अनुशासनविशेषाणां शुभाशुभफलप्रदायित्वमेव सवतो महतो महीयान् डिण्डिमनादो जगति डिण्डिमायते[2]।

---

1–श्रीकश्यपसंहितायाः समीक्षात्मकं सम्पादनम् –डॉ.बिहारिलालशास्त्री पृ.सं.5
2–कश्यपसंहितायाः समीक्षात्मकं सम्पादनम् डॉ.बिहारिलालशास्त्री पृ.सं.6

ज्योतिषशास्त्रस्य स्कन्धत्रयं प्राधान्येनाङ्गीक्रियते–

1' सिद्धान्तः

2– संहिता

3' होरा चेति। तथोक्तं वराहमिहिरेण

"ज्योतिः शास्त्रमनेकभेदविषयः स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ
होरान्योङ्गविनिश्चयश्च कथितः स्कन्धतृतीयोऽपरः।।"

1– सिद्धान्तस्कन्धः –

अन्ते सिद्धः सिद्धान्तः। तत्र ज्योतिः शास्त्रस्य यस्मिन्स्कन्धे गणितबलसम्बलम् अवलम्ब्य नभश्चारिणां प्रकाशपिण्डानां स्थितिविशेषा निश्चप्रचीक्रियन्ते स सिद्धान्तस्कन्धः। स्कन्धेऽस्मिन् सिद्धान्तशब्देनाभिज्ञायते यदत्र त्रुट्यादिसूक्ष्मकालतः प्रलयान्तावधि (कल्पावधिः) कालस्य गणना सोदाहरणं व्यक्ताव्यक्तगणितेन खगोलसम्बन्धिप्रश्नानामुत्तराणि सौरचान्द्रर्क्षसावनमानानां प्रतिपादनं नाभसपिण्डाः गतिस्थितिप्रभृतीनां वर्णनं, वेधयन्त्रादीनां निर्माणविधिश्च विधीयते तच्छास्त्रं सिद्धान्तज्योतिषम्।

2– संहितास्कन्धः–

संहिताशब्दस्य निष्पत्तिः सम् उपसर्गपूर्वकात् "डुधाञ् धारणपोषणयोः" इत्यस्माद्धातोः सम्+धा "दधातेर्हिः" सूत्रेण धा स्थाने हि इत्यादेशे सम्+हि+त "अजाद्यतष्टाप्" इति टापि अनुबन्धलोपे "मोऽनुस्वारः" इत्यनेन मस्यानुस्वारे कृते संहिताशब्दो निष्पद्यते । समस्तान् ज्योतिषशास्त्रविषयान् दधातीति संहिता।

अत्र संहिताशब्दः ज्योतिषपरकमधिकृत्य किञ्चित् समुट्टङ्क्यते। छान्दोग्योपनिषदि द्राह्यायणश्रौतसूत्रयोश्च हिकारस्य अत्यन्तविचित्रा व्याख्या प्रदर्शिता। तत्र हि शब्दः–पृथ्वी, पूर्वपवन, मेघाप्लावन, ऋतु, वसन्त, गौ, अजा प्राण, वाचो, हुंकृति, त्र्यक्षरब्रह्म, प्रणव, ह्वन्मन्थन, उदीयमानरवि, विद्युत् प्रजापति, नक्षत्रविद्या, महाविद्यादीनां द्योतकः (वाचकः) उक्तः। अतः समग्रस्यापि हिकारस्य भावो विद्यते यस्यां सा संहिता।

सम्+हिम्+ताल् भावार्थे ताल् प्रत्ययः प्रसिद्ध एव । हिम् शब्दस्यानुस्वारस्य लोपः आर्षः। हिकारो येषां तत्त्वानां वाचको विद्यते तान्येव तत्त्वानि प्रायेण ज्योतिषस्य संहिता स्कन्धे विद्यन्ते। एवमेव तैत्तिरीयोपनिषद्यपि संहिता शब्दस्य सङ्केतो वर्त्तते।

अतोऽत्र यस्मिन् स्कन्धे ग्रहाणां वर्त्तमानकालिकी स्थितिमवलम्ब्य सुमिक्ष–दुर्भिभ–समष्टिगतशुभाशुभपरिणामाः समादिश्यन्ते सः संहितास्कन्ध इति व्याचक्षते। अस्मिन्नेव संहितास्कन्धे स्वरोदय–ग्रहचारफल–सप्तर्षिचारफल–भूसंशोधन–दिक्संशोधन–

शल्योद्धार–वृष्टिविद्या–भूकम्पोल्कापात–ग्रहोदयास्तफल–मुहूर्त–शकुन–पुंस्त्रीहयगजलक्षण–वास्तु दकार्गला–वृक्षायुर्वेदादयो बहुविधाः विषया अपि संहिताया कोटावेव समावेष्टुं शक्यन्ते।

3– होरास्कन्धः–

होराशब्दस्य निष्पत्तिः– "हवृ कौटिल्ये" इत्यस्माद्धातोः "ऋद्धोरप्" इत्यनेन अप् विधाने समय आङ्गलभाषाया शब्दस्य साम्यमावहति। अथवा "हुर्छ कौटिल्यभाव" इत्यस्मात् "राल्लोपः" इति छलोपे गुणे टापि च होराशब्दः साधीयान्।

रामाश्रमीव्याख्योपेताऽमरकोषे तु "हुल् हिंसासंवरणयोः" "पचाद्यच्" धञ् वा रलयोरेकत्वे होराशब्दः सिध्यति।

"होरा तु लग्ने राश्यर्धे रेखाशास्त्रविदोरपि। "मेदिनीकोषे एवम् अकटपयसूत्रानुसारं हो–4 रा–2,अंकानां वामतो गतिः विधानेन 24 होराणां द्योतकः। एवं पाणिनीयव्याकरणानुसारं हो–1, रा–2 वामगतिविधानं परियज्य द्वादशलग्नानां बोधे भवत्यतोऽयं होराशब्दो भारतीय एव न तु वैदेशिक इति निश्चप्रचम्।

अहोरात्रशब्दस्य आद्यान्त्यशब्दयोः (अ त्र अनयोः) लोपकरणेन होरा शब्दो निष्पद्यते। "होरालग्नं भवनस्य चार्द्धम्" इत्युक्त्या होराशब्देन लग्नस्य तथा राशेरर्धस्यापि ग्रहणं भवति।

होरास्कन्धे व्यष्टिगतस्य कस्यचिदपि प्राणिनो जन्मकालिकग्रहस्थितिमनुसन्ध्य तदीयमानवादिकस्य जीवने जन्मसमयमारभ्य मरणपर्यन्तं जनितजनिष्यमाणाः फलादेशाः वक्ष्यन्ते। अस्यैव पर्यायान्तरं जातकमिति।

जातकशब्दस्य निष्पत्तिः– "जनी प्रादुर्भावे" क्तिच् क्तौ च सञ्ज्ञायाम्" सूत्रेण क्तप्रत्येय "जनसन" इत्याद्यत्वम् अथवा "ज्ञाजनोर्जा" इति जनेर्जादेशे स्वाद्युपत्तौ च जातकमिति निष्पद्यते। सद्यः प्रसूतं जातकमधिकृत्य शुभाशुभविपाकाऽऽध्यायकं शास्त्रकं जातकमिति। अरेबिकभाषाविदः संस्कृतशब्दान् विपरिणम्य विघटयन्ति जात इत्यस्यैव "वर्णागमो वर्णविपर्ययश्च" इति प्रयुज्यते। तस्मात् पूर्ववत् स्वार्थे कनि प्रत्यये ताजक इति जायते।

तजशब्दः– मुकुटवाचकः तस्मात् ठकि "ठस्येकः" इति इकादेशे ताजिक–शिरोमणिसूत्रकोऽयं शब्दो लोकप्रसिद्धः। ताजिकशास्त्रं जन्मत आरभ्य मरणावधिः वर्षप्रवेशमारभ्य वर्षान्तं यावत् प्रश्नकालमुद्दिश्य कार्यसिद्धिं यावद्वा ग्रहस्थि वशाच्छुभाशुभपरिणामानां प्रतिपादकं शास्त्रं ताजिकशास्त्रम्। वराहमिहिरेण जातकशास्त्रविषये उक्तमस्ति तद्यथा दीपोऽन्धकारस्थपदार्थानां यथार्थस्वरूपं प्रकाशयति तथैव होराशास्त्रमिदं मानवजीवनस्य समस्तरहस्यानुद्घाटयति।

ज्योतिषशास्त्रे यद्यपि मानवजीवनस्य विविधपक्षाणां प्रतिपादनार्थं ताजिकशास्त्रं प्रश्नशास्त्रं सामुद्रिकशास्त्रं–शकुनशास्त्रं–अङ्गविद्या चेत्यादयोऽनेके मार्गाः भवन्ति तथापि यादृशं यथार्थज्ञानं होराशास्त्रेण भवति न तादृशमन्येन केनापि मार्गेण भवितुमर्हति। अतो स्कन्धत्रयात्मकस्य ज्योतिषशास्त्रस्य महत्वमस्ति।

# "तैत्तिरीय–ब्राह्मण–आरण्यके स्वाध्याय–विचारः"

डॉ अरुण कुमार मिश्र
अंशकालिकसहायक–आचार्या
वेदविभाग

"भट्टभाष्कर भाष्यानुसारेण[1]

आरण्यकोपनिषत्सु प्रश्नानामयं क्रमः–

(क) भद्रं (ख) सह (ग) चित्तिः (घ) परेयुवाँसम्
(ङ) शन्नो मित्रः (च) अम्भसि (छ) नमो वाचे
(ज) देवा वै सत्रम् इति।

"शन्नो मित्र इति प्रश्ने एव ब्रह्मवित् भृगुः इति प्रश्नद्वयस्यान्तभावः।"

स्वाध्यायो ब्रह्मयज्ञः। तस्मिन् विषये उत्तम्[2] –

"यत्स्वाध्यायम धीयीतैकामप्यृचयांजुसाम वा तद्रबह्नयज्ञस्सन्तिष्ठते यहचोऽधीते पयसः कुल्यां अस्य पितृन्स्वधया अभिवहन्ति यद्यजूँषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कूल्या यदब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीर्मेदसः कूल्या अस्य पितृन् स्वधा अभिवहन्ति यदृचोऽधीते पय आहुतिभिरेव तद्देवांस्तर्पयति यद्यजूँषि घृताहुतिभिर्यत्सामानि सोमाहुतिभिर्यथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्रह्मणानीतिहा सान्पुराणानि कल्पान्गाथां नाराशंसीर्मेदाहुतिभिरेव तद्देवांस्तर्पयति त एनन्तृप्ता आयुषां तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नार्द्येन च तर्पयन्ति।"

स्वाध्यायस्य प्रशंसायामप्युक्तम[3] –

"ब्रह्मयज्ञलक्षणस्याध्यायप्रशंसाख्यं ब्राह्मणम्–अथातः स्वाध्यायप्रशंसा। प्रिये स्वाध्याय प्रवचने भवतः। युक्तमना भवति।

अपराधीनोऽहरहरर्थान् साधयले। सुखं स्वपिति। परमचिकित्सक आत्मनो भवति। इन्द्रियसंयमश्च एकरामता च प्रज्ञावृद्धिः। यशोलोकपंक्तिः। प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति। ब्राह्मण्यं प्रतिरूपचर्या यशोलोक पंक्तिम्।

लोकः पच्यमानश्चतुर्भिर्धर्मेब्राह्मणं भुनक्ति अर्चया च दानेन चाज्येयः तथा चावध यतया च ।। क।।

---

1– तैत्तिरीय संहिताभूमिकायाम्, पृ.9

2– तैत्ति.आर.द्वि.प्रश्न, 14/10/10, पृ.142

3– तैत्ति.आर. 2/11

"ये ह वै के श्रमाः इमे द्यावापृथिवी अन्तरेण स्वाध्यायो है व तेषां परमता काष्ठा। य एवं विद्वान् स्वाध्यायमधीते तस्मात् स्वाध्यायोऽध्येतव्यः" ।। ख ।।

"यद्यद वः वा अयं छनदसः विद्वान् स्वाध्यायमधीते। तस्मात् स्वाध्यायोऽध्येतव्यः" ।। ग ।।

"यदि ह वा अप्यभ्यक्तः अलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीते आ है व स नखाग्रेभ्यस्तप्यते। य एवं विद्वान् स्वाध्यायमधीते। तस्मात् स्वाध्यायोऽध्येतव्यः ।। घ ।।

"मधु ह वा ऋचः। घृतं ह सामानि । अमृतं यजूंषि यद् वा अयं वाकोवाक्यमधीते। क्षीरोदनलमांसोदनौ है व तौ। ङ।।

"मधुना ह वा एष देवांस्तर्पयति। य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते। त एवं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैः भोगैः ।। च ।।

"घृतेन ह वा एष देवांस्तर्पयति (ऋचाः, मधुः, सामानि घृतम् यजुः अमृतम्)। य एवं विद्वान् सामान्यहरहः स्वाध्यायमधीते। त एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वभोगैः। अमृतेन वा ह एष देवांस्तर्पयति। य एवं विद्वान् यजूँष्यहरहः स्वाध्यायमधीते। त एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वभोगैः" ।। छ ।।

"क्षीरौदनमांसौदनाभ्यां ह वा एष देवांस्तर्पयति। य एवं विद्वान् वाकोवाक्य मितिहासपुराणमित्यहरहः स्वाध्यायमधीते। त एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वभोगैः" ।। ज ।।

"यन्ति वा आप एत्यादित्यः एति चन्द्रमाः। यन्ति नक्षत्राणि । यया ह वा एता देवता अध्ययनं न कुर्युः। एवं है व तदहर्ब्राह्मणो भवति। यदहः स्वाध्यायमधीते। तस्मात्स्वाध्यायोऽध्येतव्यः। तस्मादपि ऋचं वा[1]

यजुर्वा साम वा गाथां वा कुम्ब्यां ।। (ब्राह्मण वाक्यम्)

वाऽभिव्याहरेद् व्रतस्याव्यवच्छेदार्थं" ।। झ ।।

उक्तमत्र यत् स्वाध्यायत्यागेन ब्राह्मणोऽपि अब्राह्मणत्वं प्राप्नोति। अतो स्वाध्यायास्यानिवार्यता नित्य कृत्यादि इव व्यवस्थापितः येन मनुष्यः स्वकीयं कर्त्तव्यस्य त्यागकरणे मा प्रवृत्तो भवेदिति। एकमपिदिनं स्वाध्यायाकरणे गतिशीलापि पदार्थाः स्थिरवत्

---

1— माधवीये "वेदप्रकाशाख्ये" माध्यन्दिनीशतपथ, ब्राह्मणभाष्यम्, श्री सायणाचार्यः 11/5/7

प्रतीयते।

अनेके ग्रन्थे पञ्चमहायज्ञाः प्रतिपादिताः सन्ति। तेषुमनुष्ययज्ञः, भूतयज्ञः, देवयज्ञः, ऋषियज्ञश्च विद्यन्ते। तत्र स्वाध्यायो हि ब्रह्मयज्ञः। तस्य लक्षणमाह[1]।

"यत्स्वाध्यायमधीयोतैकाप्यृचं यजुः साम वा तद् ब्रह्मयज्ञः संतिष्ठते इति ।। स्वस्य साधारणत्वेन पितृपितामहादिपरम्परया प्राप्ता वेदशाखा स्वाध्यायः। तत्र विद्यमानमृगादीनामन्यतममेकमपि वाक्यमधीयतेति यत्सोऽयं ब्रह्मयज्ञस्तावतैव समाप्यते।"

स्वपरम्पराप्राप्तंस्य शाखायाः एकमपि मन्त्रस्याभ्यासरूपेण स्वाध्यायः ब्रह्मयज्ञं सम्पादयति। स्वाध्यादि यज्ञकर्म आसने उपविश्य एव कर्त्तव्यम्। आसनेषु[2]।

"कुशाः कासाः शरा दूर्वा यवगोधूमवल्वजाः।
सुवर्णं रजतं ताम्रं दश दर्भाः प्रकीर्तिताः।।"

"दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङ्मुखासीनः स्वाध्यायमधीयीतापां वा एष ओषधीनाँ रसो यद्दर्भाः सरसमेव ब्रह्म कुरुते इति।

दर्भाणां सम्बन्धि महत्प्रभूतं यथा—भवति तथाऽऽसनमास्तीर्य तस्योपर्युपस्थं कृत्वा। उपस्थ शब्द आसनविशेषं बूते अकुञ्चितस्य सव्यजानुन उपरिदक्षिणपाद प्रक्षेपे सति यत्सुखावस्थानं भवति तत्कृत्वा। प्राङ्मुखः आसीनः स्वकीयांशाखामीयीत। दर्भाणाप्सारत्वमन्यत्राऽऽम्नातम्। तासां यन्मेध्यं यज्ञियं स देवमासीत अपादक्रामते दर्भा अभवनिति । ओषधीनां मध्ये दीर्भाणां शुद्धिहेतुत्वात्साखत्वम्। ततो दर्भासमवताऽधीयमानं ब्रह्म सरसं भवति।"

ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं वा इति। यदाबहिर्गन्तुमशक्तो ग्रामेऽधीते (अन्यथा ग्रामस्य बहिः) तदा मनसैवाधीयीत उदित आदित्ये प्रारब्धुमशक्तश्चेद् दिवा नक्तं वाऽधीयीत। "उतारण्येऽबल उत वाचोत तिष्ठन्नुत व्रजन्नुतऽऽसीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति य एवं विद्वान् तपस्वाध्यायमधीते इति।"

ग्रामे मनसाध्ययनुक्तम्। अरण्येऽप्यबलोऽशक्तश्चेन्मनसाऽधीयीत दर्भेष्वासीन इति यदुक्तं तत्राऽऽसननिर्बन्धे शक्ति रहितस्योत व्रजन्नित्यादयः पक्षाः। आलस्यपरिहारायेतस्ततः शनैर्व्रजन् वा क्वचिदेव तिष्ठन् वा नियममन्तरेण स्वेच्छयैवोपविश्य वा शयानो वा स्वशक्त्यनुसारेण स्वाध्यायमधीयीतैव। न त्वङ्गलोपानुसारेण प्रधानस्य लोपो न्याय्यः। तादृशस्वाध्याययुक्तोऽपि तपस्वी भवति, अध्ययनफलं प्राप्नोति। पुण्यः पंक्तिपावनश्च भवति[3]।

---

1— तै.आ.प्रपा., 2 अनु.10

2— तै.आ.अनु.10



3— तै.आ.2 / 11

"ब्रह्मयज्ञेन यख्ष्यमाः प्राच्यान्दिशि ग्रामादक्षदिर्दरः श उदीच्याम्प्रागुदीच्यांवोदित आदित्ये दक्षिणतः उपवीयोपविश्य हस्तावर्वनिज्य त्रिराचमेद्विः परिमृज्य सकृदुपस्पृश्य शिरश्च क्षुर्षा नासिकेश्रोत्रे हृदयमालभ्य यस्त्रिराचमति तेन ऋचः प्रीणाति यद्विः परिमृजति तेन यजूँषियत्सकृदुपस्पृशति तेन सामानि यत्सव्यं पाणिम्पादौ प्रोक्षति यशिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते तेनाथर्वाङ्गिरसो ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीः प्रीणाति दर्भाणाम्महदुपस्तीर्योपस्थंकृत्वा प्राङासीनस्स्वाध्यायमधीयीतापांव्वा एष ओषधीनां रसो यद्भर्भास्सरसमेव ब्रह्म कुरुते दक्षिणोत्तरौ पाणीपादौ कृत्वा सपवित्रावोमिति प्रणिपद्यत एतद्वै यजुस्त्रयीवँविद्याम्प्रत्येषा बागेतत्परममक्षरन्तदेतदृचाऽभ्युक्तमृचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति त्रीनेव प्रायुङ्कत भू-र्भुवस्स्वरित्याहैतद्वै वाचस्सत्य्यनदेव वाचस्सत्यन्तत्प्रायुङ्कताथ सावित्रीङ्गायत्रीन्त्रिरन्वाहपच्छोर्ध्दर्चशोऽनवान् सविता श्रियः प्रसविता श्रियमेवाप्नोत्यर्थे। प्रज्ञातयैव प्रतिपदा छन्दांसि प्रतिपद्यते[1]।।"

"ग्रामे मनसा स्वाध्यायमधीयीत दिवानक्तं वा इति ह स्माह शौच आह्नेय उतारण्येऽबल उत वाचोत तिष्ठन्नुत ब्रजन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायन्तपस्वी पुण्यो भवति य एववंविद्वान्स्वाध्यायमधीते नमो ब्रह्मणे, नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि[2] ।।

ब्रह्मयज्ञञ्च तुष्टेषु दैवतेषु फलं तस्मादेव भूतकालादि वैकल्यशङ्कां परित्यज्य यज्ञानुष्ठानेन फलसिद्धिं दर्शयति – "य एवं विद्वाँन्महोरात्रं उषस्युदिते व्रजँस्तिष्ठन्नासीनः शयानोऽरण्येग्रामे वा यावेत्तरसँ स्वाध्यायमधीते सर्वान् लोकान् जपति सर्वाननृणोऽनु संरचति तदेषाऽभ्युक्ता इति।।"

""अस्य यज्ञस्य निमित्तद्वयव्यतिरेकेणानध्यायकारणं नास्ति । सामग्री च न प्रयाससंपाद्या विद्यत् इत्येवं विद्वान् पुमान् काल विषये आसनादिनियमविषये देशविषये च श्रद्धाजाज्यं परित्यज्य यावोत्तरानं यावद्बलं यथाशक्ति स्वाध्यायमधीयान+ स्वापेक्षिततान्सर्वाल्लोकान्प्राप्नोति। तत्र-तत्र लोके पुरुषान्तरवहणयुक्तो न भवति, किं त्वनृण एवानुसंचरति तस्मिन्नृणस्यानुसंचारे काचिटक्वोक्ता विद्यते। तदेतदनृणत्वं संभावयितु पापस्पर्शराहित्येन स्वाध्यायं प्रशंसति[2]।

---

1– तै.आ. {15} {11} ।। 11 ।। पृ. 243

3– तदेव प्रपा. 2, अनु. 15

"अग्निर्वै जात पाप्मा जग्राह तं देवा आहुतीभिः पाप्मानम्। पाप्मानन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिाानां ब्राह्मणेन ब्राह्मणस्यछन्दोभिश्छन्दसाँ स्वाध्यायेनापहतपाप्मा, स्वाध्यायो देवपवित्रं वा एतत्तं योऽनुत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाऽभ्युक्ता इति।"

योऽयमग्निः सृष्ट्यादावुत्पन्नस्तमुत्पन्नमात्रमेव. सर्वः पाप्मा जग्राह। अग्निर्हि पापिनां पापशोधनाय समुत्पन्नः। अत एव स्मृतिकारा भाण्डादीनां पुनः पाकेन शुद्धिं ब्रुवते। यथा लोकेऽत्यन्तमलिनं वस्त्रमल्पजलेन यदा प्रक्षाल्यते तदानीं वस्त्रमालिन्यं सर्वं जले प्रविशति तथा शोधनीयवस्तुगतः पाप्मा शोधकाग्नौ प्रविष्टः तमग्निगतं पापं देवा आहुतिभिर्विनाशितवन्तः। तदाहुतिगतं पापं कृत्स्नं यज्ञेन यज्ञगतं च पापं प्रतिग्रहीत्वा ब्राह्मणेन ब्राह्मणगतं च पापं दक्षिणाभिः। दक्षिणागतं च पापं प्रतिग्रहीत्वा ब्राह्मणेन ब्राह्मणगतं च पापं तत्तन्मत्रगतैर्गायत्र्यादिच्छन्दोभिः छन्दोगतं च पापं स्वकीयशाखारूपेण स्वाध्यायेन। न चात्र स्वाध्यायगतस्य पाप्मनो निवर्तकान्तरमन्वेष्टव्यम्। यस्मादेत्स्वाध्यायस्वल्पं देवानामपि शोधकम्, देवा हि पूर्वस्मिञ्जन्मनि मनुष्याः भूत्वा स्वाध्यायमधीत्य तदर्थं चानुष्ठाय शुद्धाः सन्तो देवत्वं प्राप्ताः तमीदृशं स्वाध्यायं योऽनुत्सृजति. यः पुरुषः प्रारभ्य पश्चात्यजति स पुमान्भोगो वाचि भवति। वाङ्मात्रनिष्पाद्यत्वेनाप्रयाससाध्यं स्वाध्यायाध्ययने तथा विधायां प्रयासरहितायां महाफलहेतुभूतायां वाच्यपि भाग्यं. तस्य. नास्तीति किमु वक्तव्यम् ? यो हि पाणिलब्धं चिन्तामणिमन्निमध्ये प्रक्षिपति स भाग्यहीनः इत्यस्मिन्नर्थे न कोऽपि विप्रतिपद्यते।

तत्तस्मिश्चिन्तामणिपरित्यागसदृशोऽयं स्वाध्यायपरित्याग इत्यस्मिन्नर्थे काचिदृगभ्युक्ता। तामेतां ऋचं दर्शयति–

"यस्तत्याज सखिविदँ सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं श्रणोत्यलकँ शृणोति न हि प्रवेद सुकृतस्य पन्थामिति।।"

यः पुमान् वेदस्य वाङ्मात्रनिष्पद्यमध्ययनं करोति तं पुमांसं वेदः समस्तपापक्षय द्वारेण मोक्षपर्यन्तोत्तमगतिप्रदानेन प्रियं सखायमिवातिस्नेहेन पालयति तस्मादध्येतारं सखायं वेत्तीति सखिवित्स्वाध्यायः स्वयं च तस्य पुरुषस्य सखाऽयन्तस्नहेन कदाचिदप्यनपायात्। नहि निरन्तरध्यायिनं स्वाध्यायः कदाचिदपि परित्यजति। किन्तु दिने–दिनेऽनिशयेन तस्याधीनो भवति। तादृशं सखिविदं स्वयमपि सखायं यतत्याज परित्यक्तवान् तस्य परित्यक्तुर्वाच्यपि भागो नास्ति आयासरहिते महाफले पाठेऽपि भाग्यं नास्ति। किमु वक्तव्यं महाप्रयाससाध्ये येऽनुष्ठाने तत्फले वा यदीं यद्यपि स्वाध्यायत्यागी कदाचित् सभायामुपविश्य बहूनि शास्त्राणि श्रणोति तदनीमलमलीकमनृतमेव श्रणोति पुरुषार्थपर्यवासानाभावात्। नहि काव्यनाटकालङ्कारादिश्रवणेन वृथायुः क्षयमन्तरेण क्वचित्पुरुषार्थ पश्यामः। अत एव वाजसनेयिनः समामनन्ति नानुध्यायद्बुहः शब्दान्तवाचो विग्लापनं हि तत् इति[1]।"

---

1– कृष्ण.यजु.तैत्त.आ.1 प्रश्नः पृ.243

# "शब्दाशास्त्रदिशा द्रव्यमीमांसा"

डॉ जयश्रीदाशः
अंशकालिकसहायक-आचार्या
व्याकरणविभाग

लौकिकानां वैदिकानाञ्च शब्दानामन्वाख्यायकं व्याकरणमिति सर्वशास्त्रसिद्धान्तः। तत्र लौकिकशब्दानाम् अन्वाख्याने स्वभावतः द्रव्यगुणक्रियादिपदार्थानामुपस्थितिर्जायते, येषां विशेषविवेचनं दर्शनेषु प्राप्यते। परमिह शास्त्रे वैयाकरणैः दर्शनान्तरदृशापि पदार्थाः विवेचिताः व्याकरणस्यास्य सर्वविज्ञानपारिषदत्वात्। तदाह महाभाष्यकारः "सर्ववेदपारिषदं हीदं शास्त्रम्। तत्र नैक पन्थाः शक्य आस्थातुम्" (म.भा.2.1.57) इति । यथा–गुणो समूहो द्रव्यम्, अयुतसिद्धावयवानुगतः समूहो द्रव्यमिति सांख्ययोगदर्शनयोः सिद्धान्तभूतमतम्, तथैव शब्दशास्त्रेऽपि– "द्रव्ये च भवतः कः सम्प्रत्ययः? अथ मतमेतत्कृदभिहितो भावो द्रव्यवत् भवतीति, स्त्रीत्वमपि स्त्रीत्वेनाभिहितं द्रव्यवत् भविष्यतीति स्त्रीयाम्" (अ.4.1.3) इति सूत्रभाष्ये पतञ्जलिनोद्यते।

द्रव्यशब्दस्य निष्पत्तिविचार :–

शब्दस्यास्य निष्पत्तिः इत्थं जायते–1– द्रवतीत्यर्थे द्रुधातोः कर्त्तरि क्विपि द्रुः (द्रु नामो वृक्षः) तस्यावयवोविकारो वेत्यर्थे "द्रोश्च" (अ.4.3.161) इत्यनेन सूत्रेण यत् प्रत्यये द्रव्यमिति। अत्र द्रव्यशब्दार्थः फलं शाखा वा । यथोक्तं सिद्धान्तकौमुद्यां द्रुर्वृक्षः तस्य विकारो अवयवो वा द्रव्यामिति। अत्र प्रसङ्गे तत्वबोधिनीकारः वक्ति– "फलितस्य वृक्षस्य फलावयवो विकारश्च। तेनान्यतरस्मिन् प्रत्ययः" इति।

2– "द्रव्यञ्च भव्ये" (अ.5.3.104) सूत्रेण भव्ये सौम्यादिगुणयुक्तेऽर्थे द्रुशब्दादेव यत्प्रत्यये शब्दोऽयं निपात्यते।

3– द्रोतुं गुणकर्मादिभिराश्रयत्वेनप्राप्तं योग्यमित्यर्थे "अचो यत्"(अ.3.1.61) इत्यनेन निष्पद्यतेऽयं शब्दः। यः पृथिव्यादिद्रव्यसामान्यस्य वाचको भवति। सन्दर्भेऽस्मिन्तत्त्वबोधिनीकारः– "द्रव्यगुणकर्म–इत्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणैर्द्रूयते आश्रीयते इति "अचो यत्"(अ.3.1.69) इति यत्प्रत्ययान्त" इति।

4– द्रवणमित्यर्थे "दोरप्" (अ.3.57) इत्यनेन भावेऽप्रत्यये सति द्रव इति भवति। ततश्च द्रवमर्हतीति विग्रहे "तदर्हति" (अ.3.1.91) इत्यनेन यत्प्रत्यये सति द्रवशब्दः निष्पद्यते।

द्रव्यभेदविचारः– अह शास्त्रे पारमार्थिक–सांव्यावहारिकभेदेन द्रव्यं द्विविधम् । तत्र पारमार्थिकम्–लौकिकद्रव्यमित्यर्थः। सांव्यावहारिकम्–शब्दशास्त्रव्यवहारोपयोगिमात्रम्, तत्रोद्यते नागेशः "इदञ्चैतच्छास्त्रमात्रोपयोगिद्रव्यलक्षणम्" (म.भा.उद्योत.4.1.3) । यथोक्तं हेलाराजेन–"द्रव्यञ्च द्विविधम्, पारमार्थिकम्, सांव्यावहारिकञ्च (हेला.वा.प.3.2.1) ।

पारमर्थिकद्रव्यस्वरूपविचारः गुणसमुदायो, अवयवसमुदायो च द्रवमिति पारमार्थिकद्रवस्वरूपम्। "क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम्" (वै.सू.1.1.15) इति यदुक्तं वैशेषिकैः शब्दिकैः तत्राभ्युपगम्यते। यतो हि द्रव्यं गुणादिभ्यो बहिर्भूतं न दृश्यतेऽपि तु तदात्मकमेव। यथास्थलकमलपुष्पम्। अत्र हि सुरभिर्गन्धः, शुक्लरक्तनीलात्मकं वा किमपि रूपम्, कषायो रसः स्पर्शः सति चट्चटात्मको ध्वनिरूपो शब्दः श्रूयते, तेन एतेभ्यो वहिर्भूतं किञ्चिदपि नानुभूयते नातिरिक्तद्रव्यं नाम स्वीकरणीयं स्यात्। तथा च रूपादिभ्योऽतिरिक्तं न किञ्चिदुपलभ्यते, तदेव अनुभूयते। अतः रूपादिगुणसमुदितमेव द्रव्यम्। यथाह पतञ्जलिः– "अनन्यच्छब्दादिभ्यो द्रव्यम्, न हि शब्दादिभ्योऽन्यदुपलभ्यते। पशोः खल्वपि विशसितस्य पर्णशते न्यस्तस्य नान्यच्छब्दादिभ्य उपलभ्यते" (म.भा.5.1.119) इति। अत एव स्त्रीयाम् (4.1.3) इति सूत्रस्थभाष्येऽपि पतञ्जलिराशङ्कामुद्भाव्य उत्तरयति – "द्रव्ये च भवतः कः सम्प्रत्ययः? गुणसमुदायो द्रव्यमिति"। अत्र शङ्कते–यदि गुणसमुदायस्य, अवयवसमुदायस्य वा द्रव्यत्वं स्वीकारे गोरिदं कृष्णरूपम्, घटस्येदं रूपं नीलमित्यदौ भेदे षष्ठी न स्यात्, गुणसमुदायस्य द्रव्यत्वेन भेदाभावात् इति चेत्र। यतोहि अभेदेऽपि भेदवृद्धिं कृत्वा षष्ठ्या उपपत्तेः। अत एवं पुरूषस्य चैत्यन्यम्, राहोः शिरः, ममेदं शरीरमित्यादौ भेदस्यासत्त्वेऽपि भेदमादाय षष्ठी भवति। एवमेंव अवयवादतिरिक्तमवयवि द्रव्यत्वमङ्गीक्रियते चेत् तन्तुभ्यः पटस्य गुरूत्वाधिक्यं स्यात्। अवयवावयविनोर्भिन्नपरिमाणत्वादतिरिक्तत्वाच्च परन्तु नैव दृश्यते। अतोऽवयवानुगतः समूह एव द्रव्यम्, न तु ततो भिन्नमवयवि द्रव्यमिति। तथाहि नागेशः– किञ्चैवं पटादौ सूत्रादिभ्योऽधिकगुरूत्वाद्युपलम्भापत्तिः। तस्माद्यत्कृतो विशेष इति भाष्यस्य कार्पासादधिकगुरूत्वसमूहकृतो विशेषः, तत्समूहो द्रव्यमित्यक्षरार्थः। एवञ्च तुल्यन्यायाद्रुपादसमूह एव द्रव्यम्" (म.भा.उद्यो. 6.1.119) इति। अतः गुणसमुदायस्य द्रव्यत्वस्वीकारदेव "द्रव्ये च भवतः कः सम्प्रत्ययः"? गुणसमुदायो द्रव्यमिति "स्त्रीयाम्" इति सूत्रभाष्यम्, एवमवयवसमुदायस्य द्रव्यत्वस्वीकारे "कं च प्रत्यवयवो गुणः? समुदायमिति" "संख्याया अवयवे तयप्" (अ.5.2.42) इति सूत्रभाष्यञ्च संगच्छते।

सांव्यावहारिकद्रव्यस्वरूपविचारः–

सांव्यावहारिकद्रव्यमिति पदेन शब्दशास्त्रोपयोगि द्रव्यं गृह्यते। तच्च लिङ्गसंख्याकारकान्वितमिति शाब्दिकाः। तत्रोद्योतकारः–"लिङ्गसंख्याकारकान्वितं हि

द्रव्यं भवति" (म.भा.उद्यो.1.2.53) (म.भा.2.2.19)। अत एव कृदभिहितो भावश्च द्रव्यं भवति। यथा–"भावे" (अ.3.3.18) इति सिद्धावस्थापत्रे धात्वर्थे वाच्ये धातोर्घञ् स्यात्। पाकः, पाकौ, पाकाः। "तस्य भावस्त्वतलौन्र (अ.3.3.18) इति प्रकृतिजन्यबोधे प्रकारीभूतो (विशेषणीभूतो) भावः। "तस्य भावस्त्वतलौ" (अ.8.1.119) इति प्रकृतिजन्यबोधे प्रकारीभूतो (विशेषणीभूतो) भावः। गोर्भावो गोत्वं गोता इत्यादिः। अन्यथा कृदभिहितभावस्य, तद्धिताभिहितभावस्य च गुणसमुदायत्वाभावात् द्रव्यत्वं न स्यात्। तेन द्रव्यत्वाभावे पाकः, पाकौ, पाकाः, इत्यादौ लिङ्गसंख्याकारकाणाम् अव्ययोऽपि न स्यात्। यथोक्तं पतञ्जलिना–"यदि गुणसमुदायो द्रव्यम्, का गतिर्ये एते भावाः कृदभिहिताः, तद्धिताभिहिताश्च चिकिर्षा गोतेति। अथ मतमेतत्–कृदभिहितो भावो द्रव्यवत् भवतीति। स्त्रीत्वमपि स्त्रीत्वेनाभिहितं द्रव्यवत् भविष्यतीति" (म.भा.4.1.3)। कैयटोऽपि "यथा घटादिद्रव्यं घटादिभिः शब्दैर्लिङ्गसंख्याकर्मादिशक्तियुक्तमभिधीयते, यथा–पाकादिभिः शब्दैः पाकादिको भावः" (प्र.6.2.139) इति। गुणकर्मसामान्यानामपि सांव्यवहारिकं द्रव्यमित्यामनन्ति वैयाकरणाः। यतो हि अस्येदं रूपम्, मधुरोऽयं रसः, चैत्रस्येयं गतिक्रिया इत्यादयः सर्वनाम्ना परामृश्यन्ते। प्रदीपकारः वक्ति– "यत्किञ्चिदिदं तदति सर्वनाम्ना परामर्शयोग्यं वस्तु तद् द्रव्यत्वेन विवक्षितम्। तेन जातिगुणक्रिया अपि गृह्यन्ते" (प्र.5.3.54) इति। अभिहितञ्च भर्तुहरिणा–

"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः।।" (वा.प.3.43)

शब्दस्य द्रव्यत्वविचार–

येन यत्कार्यं भवति, तत्कार्यं द्रव्यमेव। यथा–घटः,पटः इति। यस्य कार्यस्य यत् कारणं भवति, तदपि कारणं द्रव्यमेव। अतः शब्दस्यापि द्रव्यत्वं सिध्यति। यथोक्तं तैत्तिरीये प्रातिशाख्ये– "तत्र शब्दद्रव्यमुदाहरिष्यामः (10.3) इति। तेषां वर्णानां संघातप्रयोगः शास्त्रमित्युच्यते। तस्मिञ्छात्रे यानि कार्याणि भवन्ति तान्युदाहरष्यिामः इति सूत्रार्थः। तत्र यद्यत् कार्यं येन क्रियते तत्तस्य द्रव्यमित्युच्यते। घटस्य मृदिति। तथा शास्त्रस्य वर्णा इति।" सन्दर्भेऽस्मिन् नागेशः– "तपरस्तत्कालस्य" (अ.1.1.70) महाभाषोद्योते– "वर्णस्तु गुणरूपत्वात् द्रव्यरूपत्वमिति"। तथा च वर्णाः उदात्तत्वानुदात्तत्वस्वरितत्वानाम् अधिकरणम्। न हि द्रव्यमन्तरा किमप्यन्यदधिकरणं भवितुमर्हति। अतः यत् अधिकरणं भवति तत् द्रव्यमेव। एतेन उदात्तत्वानुदात्तत्वस्वरितत्वानामधिकरणत्वाच्छब्दस्य वर्णस्य वा द्रव्यत्वं सिध्यति। अभहितञ्च पतञ्जलिना– "द्रव्यं हि लोकेऽधिकरणमित्युपचर्यते" (म.भा.2.3.50)। अत्र प्रसङ्गे नागेशः– "तारत्वादयो गुणाः शब्दनिष्ठाः, तदाश्रयत्वाच्छब्दस्य द्रव्यत्वम्" (वै.सि.म) इति।

अत्र सारः– इह शास्त्रे गुणसमुदायो द्रव्यम्, अवयवसमुदायो द्रव्यमिति च

सिद्धान्तः। न तु गुणतिरिक्त गुणि द्रव्यम्, अवयवात् भिन्नमवयवि द्रव्यमिति। एवमेव स्फोटः शब्दः, ध्वनिः, शब्दगुणः इति भाष्यवचनात् शब्दस्य द्रव्यत्वं ध्वनेर्गुणत्वञ्च गम्यते इति दिक्।

---

संकेताक्षरसूची–

1– अ.अष्टाध्यायी,

2– म.भा. महायभाष्यम्

3– म.भा.उद्यो. महाभाष्यस्य उद्योतटीका

4– वै.सु. वैयाकरणसुधानिधिः

5– वै.सि.म. वैयाकरणसिद्धान्तमञ्जूषा

6– प्र. प्रदीपटीका

7– वैं.सू. वैशेषिकसूत्रम्

# न्यायशास्त्राधिगमसमस्या परिहारोपायाः

डॉ.नारायण वैद्य
असि. प्रोफेसर, शिक्षाशास्त्रविभाग

संस्कृतं नाम दैवी वाक् अन्वाख्याता महर्षिभिः इति ऋषिणां वचनं संस्कृतभाषा देवभाषा इति स्पष्टतया ज्ञापयति। इयं भाषा रामायणमहाभारतादि ऐतिहासिकसाहित्येन न्यायवेदान्तदिदर्शनसाहित्येन भासकालिसदिकावीनां नाटकपद्यादिसाहित्येन च सम्मिलिता वर्तते। अपि च द्रविडभाषाणां जननी सन् इयं भाषा द्रविडेतरभाषान् अपोषयत्। अत एव खलु उच्यते संस्कृतं सर्वासां भाषाणां कृते कल्पवृक्षायते इति। अस्याः भाषायाः आभूषणं संस्कृतसाहित्यग्रन्थाः इति वदामः चेत् नातिशयोक्तिः स्यात्।

इत्थं विततस्य संस्कृतसाहित्यस्य अध्ययनाय बुद्धि विमलीकरोति न्यायशास्त्रम्। तदुक्तं वेङ्कटाध्वरिणा–

मोहं रुणद्धि विमलीकुरुते च बुद्धिं
सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतयायुनक्ति
तर्कश्रमो न कुरूते किमिहोपकारम्।। (विश्वगुणादर्श चम्पू तर्कवर्णनम्)

एवं प्रकीर्तितस्य न्यायशास्त्रस्याधिगमः दुष्करायते इति न्यायशास्त्राध्यापकानां छात्राणां च अभिप्रायः वर्तते। किं तत्र कारणमित्यन्विष्यमाणे निम्नाङ्कितन्यायशास्त्राधि–गमसमस्याः दृष्टिपथमायान्ति –

- न्यायशास्त्राध्ययनस्य उद्देश्यहानिः।
- न्यायशास्त्राधिगमकाठिन्यम्।
- लौकिकविषये आसक्तिः।
- न्यायशास्त्रस्य कष्टेन लोकान्वयः।
- आवश्यकतायाः अभावः।
- आधुनिकपद्धत्या न्यायशास्त्रस्याध्यापनम्।

एवम् अनुभूयमानसमस्यानां परिहारोपायान्वेषणाय प्रयत्नः क्रियते। तत्र परिहाराः निम्नाङ्किताः भवितुमर्हन्ति।

- **न्यायषास्त्रस्य साफल्यम्**

दृष्टे सति अदृष्टफलकल्पना इति न्यायात् न्यायशास्त्रस्य अध्ययनं न केवलं न्यायाय। किन्तु लौकिकव्यवहारनिर्वहणाय इति सोपपत्तिकं सोदाहरणम् उद्बोधनीयम्। तेन न्यायशास्त्रस्य काठिन्यं बहुफलकत्वात् सहनीयं भवति। फलमुखगौरवस्य अदोषत्वात्।

- **न्यायषास्त्राधिगमकाठिन्यपरिहारोपायाः**

न्यायशास्त्राधिगमकाठिन्यनिवृत्तये सोपानक्रमेण बोधनविधानम् अनुसर्तव्यम्। तदर्थ पाठ्यत्वेन यः ग्रन्थः निर्दिश्यते स ग्रन्थः न्यायशास्त्रेतिहासः, न्यायशास्त्रस्य लघुपरिचयः पाठ्यभागस्य न्यायशास्त्रे स्थानं महत्वञ्च, तस्य विषयस्य इतरत्र उपयोगः इति बहुसंक्षिप्तरूपेण प्राक्कथनं विधायैव पाठ्यपुस्तकं निरूपणीयम्।

सम्प्रति साक्षादेव शास्त्रशैल्या विषयनिरूपणात् काठिन्यंमनुभूयते। तन्निवारणाय पाठ्यपुस्तकनिर्मितिः अत्यावश्यकी।

- **न्यायषास्त्राध्ययने रुच्युत्पादनम्**

अध्ययनम् आसक्तिमपेक्षते। आसक्तिस्तु लौकिकविषये सहजा। अतः लौकिकविषयार्जने न्यायशास्त्रस्य प्रकृतपाठ्यभागः कथमुपज्यते इति निरूपणीयम्। तेन न्यायशास्त्रं स्वहितकरमिति भावना उदेति। तादृशभावनोदयः एवं अध्ययनप्रवृत्तौ निदानम्।

- **न्यायषास्त्रस्य लोकान्वयप्रदर्षनम्**

न्यायशास्त्रस्य विषयः प्रधानतः चत्वारः– प्रमाणं, प्रमेयं, प्रमाता, प्रमा चेति। अत्र प्रमा दृष्ट्या एव लोकावलोकनं क्रियते। प्रमायाः यथार्थज्ञानरूपत्वात् न केनापि चित्रेण अथवा लौकिकबोधनसाधनेन इमां प्रमां प्रदर्शयितुं शक्नुमः। आन्तरात् प्रमा। अतः तस्या लोकान्वयः दुष्करः। किन्तु प्रमेयस्य प्रमाणस्य च लौकिकालौकिकभेदेन लाभात्। लौकिकानां साक्षात्कारयितुं शक्यते। तथा यत्नः विधेयः।

तत्र प्रमाता तु आत्मा एव। अतः तद्बोधनं नान्यैः उपायैः शक्यते। न केवलं न्यायशास्त्रे अयं प्रयासः विज्ञानादिष्वपि समान एवायम्। अतः यावत्साध्यं तावत्पट्टिकारूपेण चित्ररूपेण बोधनसाधनं निर्माय तत्प्रदर्शनपूर्वकं पाठनं कर्तव्यम्। तेन छात्राः दर्शनक्रिया द्वारा विषये दत्तचित्ताः, अपगतचिन्ताः यथावद्विषयमवगच्छन्ति।

- **न्यायषास्त्रास्यवष्यकता निरूपणम**

यदावश्यकं तत् कयापि रीत्या आप्यते। सम्प्रति न्यायशास्त्राध्ययनं क्रियते चेत् तत् कुत्र अनिवार्यतया उपयुज्यते? अधीतन्यायशास्त्रविषयस्य आरोग्यशास्त्रे न्यायवितरणे, वाग्वादे, विधिशास्त्रे तान्त्रिकक्षेत्रेष्वपि इयं पदवी अनिवार्य इति यदि आवश्यकता सृज्यते तदा तदर्थं यतते लोकः। यतो हि प्रकृते न्यायालये या विचारप्रणाली दृश्यते सा गौतमीयवादकलानुसंवादिनी वर्तते। अतः वावधूकानां (lawyer) वृत्तौ अनिवार्यतया न्यायशास्त्राध्ययनम् आवश्यकमिति नियमः करणीयः। आरोग्यशास्त्रे अपि सूत्रस्थानस्य अध्ययनं न्यायशास्त्राध्ययनमन्तरां न सम्भवति। अतः वैद्यकीयाध्ययनेऽपि न्यायशास्त्राध्ययनस्य अनिवार्यता [illegible] करणीया। तेन वैद्यकीय विज्ञानमपि बलवत्तरं भवति।

न्यायोज्जीवनमपि भविष्यति।

- **न्यायषास्त्राध्ययने अभिवृत्त्युत्पादनम्**

न्यायशास्त्रं कष्टमिति भावना न्यायशास्त्राध्ययने कण्टकीभूता। यथा समुद्रतरणं कष्टमिति भावनया व्यावृत्तस्य तरणसुखं न कदापि लभ्यते। तद्वत् न्यायशास्त्रस्य अध्ययनसुखाद्वञ्चिता भवन्ति। अतः तादृशमिथ्याकल्पनां दूरीकर्तुं न्यायशास्त्रे विद्यमानानां बहूपयुक्तव्यापकसुलभविषयाः प्रसारणीयाः। सर्वत्र शास्त्रेषु केवलं सुलभाः कठिनाः भवन्त्येव।

- **आधुनिकपद्धत्या ग्रन्थानां निर्माणम्**

कालभेदेन पठितृणां छात्राणां रूचिभेदोऽपि दृश्यते। अतः प्राचीनपद्धत्या याः व्याख्याः ग्रथिताः ताः छात्राणां दोषक्लेशनिवारणे असमर्थाः भवन्ति। अधुनिकपद्धत्त्या पदपदार्थविवरणेन सुविस्तृतटिप्पण्या सारण्यादिसहकारेण वा विरचितानि व्याख्यानानि छात्राणाम् आध्ययनं सुकरं करोति। तस्मात् आधुनिकपद्धत्या विरचितानि व्याख्यानानि नूनं शास्त्रे प्रविविक्षूणां छात्राणां साहाय्यम् आचरतीति मे मतिः।

- **कार्यषालायाः आयोजनम्**

श्लिष्टाक्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता।

यस्योभयं साधु सशिक्षकाणां धुरिप्रतिष्ठापयितव्य एव ।। इति प्रसिद्धा कालिदासीयवाणी। (मालविकाग्निमित्रम्--1.6)

न्यायशास्त्रे लब्धकीर्तीनां पण्डितानां सहकारेण पञ्चदशादिनात्मकः अथवा ततोप्यधिकदिनात्मकः कार्यगारः आयोजनीयः। तत्र अवच्छेदकावच्छिन्नादि पारिभाषिकपदानां सोदाहरणं परिचयः, व्याख्यानेषु तेषां समन्वयः इत्यादयः विषयविशेषाः लौकिकोदाहरणैः सह उद्बोधनीयाः।

- **षिक्षाक्रमस्य व्यवस्थापनम्**

प्राचीनविद्यायाः आधुनिकपद्धत्या अध्ययनं समस्यायाः कारणं भवति। उदाहरणार्थं परीक्षायाः उत्तीर्णार्थमेव पठनं, मूलपङ्क्तीनां अर्थज्ञानं विना कठस्थीकरणं, केवलं लेखनपद्धत्या परीक्षणम् इत्यादयः अशाः शास्त्राध्ययनस्य बाधकाः भवन्ति। अतः सुचारुपेण शिक्षाक्रमस्य व्यवस्थापनं करणीयम्।

- **पारम्परिकषैल्या अध्यापनम्**

न्यायशास्त्रस्य अधिकरी कः इति जिज्ञासायां दीपिकाकारेण अधीतव्याकरणकोशादिमान् न्यायशास्त्रस्य अधिकरी इति कथितम्। विनाव्याकरणकोशादिज्ञानं न कस्यापि प्रवृत्तिः भवति स्म प्राचीनकाले । व्याकरणकोशादिग्रन्थज्ञानेन व्युत्पनाः एव न्यायशास्त्राध्ययने एवं अधीतस्य विषयस्य स्वीयवाक्यैः प्रकटीकरणे च समर्थाः भवन्ति।



अतः परम्परिकशैल्यां अध्यापनक्रमः आवश्यकः।

साम्प्रतं विज्ञानस्य प्राधान्यात् प्रपञ्चोऽयं प्रतिक्षणं परिवर्तनशीलः विद्यते। परिवर्तनशीलेऽस्मिन् प्रपञ्चे उन्नतिः अधिगममवलम्बते। एतदेव समर्थयति प्राज्ञोक्तिरपि अधिगमः समाप्तिं न एष्यति इति। अतः प्राचीन अर्वाचीनविध्योः समन्वयेन न्यायशास्त्राधिगमं सरलं कर्तुं प्रयतामहे इत्यलं विस्तरेण।

सन्दर्भग्रन्थसूचीः

1– न्यायदर्शम् – चौखम्बा विद्याभावन, वाराणासी–1
2– तर्कसंग्रह – मानमन्दिर वाराणासी
3– विश्वगुण्दर्शचम्पू– चौखम्बा विद्याभवन, वाराणासी–1
4– शिक्षा मनोविज्ञान– डॉ. रामशकल पाण्डे, R.L. बुक डिपो, मेरठ–1
5– शिक्षा मनोविज्ञान, दास.के.मंगल. PH.I Learning Private Ltd. New Delhji-1
6– शिक्षा दर्शन–डॉ. भास्कर मिश्र, नाग पब्लिशर्स, विश्वविद्यालय प्रकाशन, वाराणासी

(प्रहेलिकाः)

अम्बा तुष्यति न मया न स्नुषया,
सापि नाम्बया न मया।
अहमपि न तया न तया,
वद राजन् ! कस्य दोषोऽयम् ?
(उत्तरम्–दारिद्यस्य)

# "संस्कृतशिक्षणम्"

डॉ.मदन सिंह

असि. प्रोफेसर (संविदा) शिक्षाशास्त्र विभाग

भारतीयसंस्कृतेः मूलाधाराः भवन्ति चत्वारो वेदाः। भारतस्य संस्कृतिसभ्यते एतेषु चतुर्षु वेदेषु संरक्षिते वर्तेते। अत उच्यते –**"भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा"** इति।

किञ्च भारतीयसंस्कृतेः संरक्षणं संस्कृतभाषया एव भवितुमर्हति नान्यथा। अस्माकं संस्कृतिः संस्कृताश्रिता। सांस्कृतिकोद्देश्यं संस्कृतेन सफलं भवति। किञ्च संस्कृतेन कलात्मकम् उद्देश्यं सिद्ध्यति, यतः छात्राः सस्कृतकाव्यनाटकादीनाम् अध्ययनेन सौन्दर्यानुभूतिं प्राप्य स्वयं ताललयानुसारं नाटकानि कर्तुं समर्थाः भवन्ति। अनेन संस्कृतेन छात्रेषु रचनात्मकगुणस्य विकासः भवितुमर्हति। संस्कृते अधीतानां विषयाणां द्वारा रसानुभूतिर्जायते मनोरञ्जनाय च विस्तृतं साहित्यं प्राप्यते।

वैदिककालिकशिक्षातः आधुनिकशिक्षापर्यन्तं शिक्षणव्यवस्था यामपि परिवर्तनं दृश्यते। अद्य कक्षाऽऽधारितशिक्षायाः वातावरणं शनैः शनैः जालपुटाधारितेन (web based) सान्द्रमुद्रिकाधारितेन (C.D.based) , स्वचालितगत्या च अधिगमस्य प्रक्रियायां परिवर्तितम्।

परिवर्तमानासु परिस्थितिषु संस्कृतशिक्षणं रोचकं कथं स्यात्? इति सन्दर्भे नवचिन्तनस्यावश्यकता अस्ति। यथोक्तम् – "पुराणमित्येव न साधु सर्वम्"। वस्तुतः क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः भवति। अतः पुराणात् किञ्चिद् ग्राह्यं, नूतनादपि च तथैव किञ्चिद् ग्राह्यम् उभयत्रापि किञ्चित् श्रेयस्करं सुखावहं लोकोपकारि च।

पारम्परिकधारायाम् आधुनिकधारायाञ्च अस्याः संस्कृतभाषायाः शिक्षणं वर्त्तमानकाले द्विधा प्रचलति। पारम्परिकधारायां गुरुकुलम्, आश्रमः, मठः, पाठशालादयः आधुनिकधारायां च विद्यालयमहाविद्यालयादयोऽन्तर्भवन्ति। एतान्यतिरिच्य सम्भाषणशिविरप्रचालनेन, अनौपचारिकभाषा–शिक्षणेन, सायंकालिककक्षास्वीकरणेन च संस्कृतभाषाशिक्षणं प्रचाल्यते। संस्कृतभाषा प्राचीनकाले व्यावहारिकी लोकभाषा चासीत्। अतः संस्कृतभाषाशिक्षणस्य पृथक्व्यवस्था नासीत्तदानीम्। अतः मठाश्रमगुरुगृहेषु छात्राः गुरोः सान्निध्यं लब्ध्वा भाषां शिक्षन्ते स्म। एवञ्च वेदोपनिषत्स्वपि वर्णितमस्ति यत् पुरा श्रोत्रियः ब्रह्मनिष्ठ–ब्रह्मचारी गुरुं प्राप्य सर्वं शिक्षते। धर्मोपदेशमाध्यमेन जनानां कल्याणाय तानेव अधीतान् विषयान् सर्वत्र प्रसायति स्म। एवम् आधुनिकभारते आधुनिकाः विद्वांसः संस्कृतभाषाशिक्षणाय सततं कृतप्रयासाः सन्दृश्यन्ते।

अतः संस्कृतभाषाशिक्षणं राष्ट्रस्य सर्वेषु क्षेत्रेषु स्तरेषु च अनिवार्यरुपेण स्यात्। अनया भाषया एव अस्माकं सभ्यतासंस्कृत्योर्ज्ञानं सम्भवति। तथैव साहित्यं मानव सभ्यतायाः संस्कृतेः विकासस्य च सरलं साधनम्। अस्मिन्नेव समाजस्य प्रान्तस्य देशस्य वा उत्कर्षस्य अपकर्षस्य वा सामाजिकरीतिनीतीनां जातीयविचाराणां व्यवहाराणाञ्च दर्शनं जायते। एतस्मादेव कारणात् समाजस्य देशस्य वा दर्पणं साहित्यम् इत्यभिधीयते।

# "शिक्षाशिक्षकश्च"

डॉ.शुभश्री दाश:
असि. प्रोफेसर (संविदा) शिक्षाशास्त्र विभाग

शिक्षा तावत् सर्वाङ्गीणविकाससाधयित्री भवतीति सर्वैरङ्गीक्रियते। वैदिकशिक्षा तु आध्यात्मिकज्ञानकेन्द्रिता आसीत्। तदानीम् अध्यात्मिकतायाः भित्तिभूमिमनुसृत्य सर्वाङ्गीणविकासार्थं प्रयासः विधीयते स्म। चतुवर्गस्य प्राप्तिरेव जीवनस्य लक्ष्यमासीत्। जनेषु सद्विवेकोत्पादनाय तेषां सर्वाङ्गीणविकासाय च गुरवः प्रयत्नशीला भवन्ति स्म। व्यक्तेः चरित्रनिर्माणं व्यक्तित्वस्य विकासः सामाजिककर्त्तव्यपालनं जीविकोपार्जनक्षमता भारतीयसंस्कृतेः प्रचारः प्रसारश्च तदानीं शिक्षायाः उद्येश्यमासीत्। तत्कार्यं तु शिक्षकाधीने एव आसीत्। महर्षिणामनुना उक्तम्– यदि आचार्यः योग्यशिष्यं न प्राप्नोति चेत् विद्यादानं न कुर्यात्। यतोहि अयोग्येभ्यः छात्रेभ्यः विद्यादानापेक्षया विद्यया सह मरणं श्रेष्ठम्। तदीनींगुरोः प्रमुखमुद्येश्यमासीत् छात्राणां योग्यतानुगुणं, रुच्यनुरूपं च मार्गचयनम्। अतः शिक्षकैः द्रष्टव्यं यत् छात्रस्य विकासः कस्यां दिशि विद्यते। तस्य प्रवृत्यनुसारं शिक्षा दद्यात्। अनेन सफलताप्राप्तेः संभावना दृढा भवति । ये चोचितमार्गदर्शनुदबुद्धाः जायन्ते। जनानामन्तः करणे त्रिविधगुणाः स्थायिरूपेण विद्यमानाः भवन्ति। सत्त्वगुणस्योद्रेकेण सत्कार्येषु प्रवृति र्जायते। शिक्षायाः कार्यं तु सत्त्वस्योद्रेकेण रजस्तमसोश्च्छादनमेव मन्यते। प्राचीनभारतीयशास्त्रेष्वेतदर्थं बहुविधोपायाः वर्णितास्सन्ति। तेषामुपायानां समुचितप्रयोगः अधुनातन शिक्षाव्यवस्थायामपि कर्तुं शक्यते।

प्रश्नोपनिषदि भारद्वाजस्येदं वचनं– नाहमिदं वेद् यद्यहमिमवेदिषं कथं ते नावक्ष्यमिति (प्र.3.6.4) भवगतः पिप्पलादस्य षोडशकलायुक्तपुरूषविषयकजिज्ञासा जागर्ति। तदेदं वचनं भारद्वाजस्य, भगवतः येनेदं ज्ञायते यत् ज्ञातं सर्वं योग्यशिष्यायोपदिषत्। अज्ञातस्य ज्ञानाय सततं प्रयत्नशीलो भवेत्। निरूक्तकारेण यास्केन आचार्यशब्दस्य त्रिधाव्याख्या कृता। यथा–आचार्यः कस्मात्? आचार्य आचारं ग्राहयति। आचिनोत्यर्थान्। आचिनोति बुद्धिमिति वा (नि.1.4) । एताः तिस्रोऽपि व्याख्याः आचार्यस्य कर्त्तव्यानि प्रकाशयन्ति। तदानीं शिक्षायाः प्रथमोद्येश्यमासीत् चरित्र निर्माणम्। अतः आचार्यस्य प्रथमं कर्त्तव्यं शिष्यस्य चरित्रनिर्माणमेवासीत्। परन्त्वेदं कार्यमुपदेशमात्रेण नैव सिध्यति। अतः आचार्यः स्वयमपि आचारवन्तः आसन्। आचार्यशब्दस्य द्वितीया व्याख्या यास्केनैव कृता "ज्ञानेन शिष्याणां बुद्धेः विकासः[1] इति। बालकानां ज्ञानस्य विकासः विस्तारश्च शिक्षोद्येश्यं वरीवर्ति, किञ्चस्य सम्पादनं गुरोः कर्त्तव्यमिति। आपस्तम्बधर्मसूत्रे स्पष्टरूपेण उल्लिखितमस्ति यत् यः आचार्यः ब्रह्मचारिणे ज्ञानदानाय सङ्कोचं करोति सः आचार्यः

न, स आचार्यपदस्य कृते सर्वथा अयोग्येति वा। यास्कस्य तृतीयव्याख्या वर्तते यः शिष्याणां बुद्धिं विकासयति परिपक्वयति च सः आचार्यः। सर्वविदितमेवेदं यत् शैक्षिक कार्यक्रमाणां व्यापकत्वे विस्तृत्वेऽपि निरशेषज्ञानप्राप्तिर्न सर्वत्र सम्भवति। मानवजीवने आगताः समस्याः बहुविधाः भवन्ति प्रायः छात्रजीवने समस्याऽभिमुखीकृत्य स्वयं समादधीरन्, तथाऽध्यापकेन प्रयासो विधेय इति शिक्षायाः मुख्यमुद्देश्यमासीत्।

प्राचीनकाले अध्यापनमेकं पवित्रतमं कार्यमासीत्। विद्याधनं दानाय भवतीत्यादर्शः तेषां समक्षमासीत्। मनुनाऽपि निर्दिष्टम्– अध्यापनं ब्रह्मयज्ञश्चाचार्यस्य कर्तव्यं वरीवर्तीति। आचार्यः सात्विकं जीवनविधिं स्वीकुर्यात्, येन शिष्यास्तमादर्शं कृत्वा विहारविलासादिभ्यो विरक्ताः भवेयुः। सर्वेषां वर्णानां धनिकाः दरिद्राः वा बालकाः उपनयनादनन्तरं गुरूकुल निवसन्ति स्म। ते ब्रह्मचारिणोऽभवन्। तेषां सर्वविधदायित्वं गुरूः स्वयमेव निर्वहति स्म।

प्राचीनकाले गुरूः सकलसद्गुणैः भूषित आसीत्। छात्रोऽपि तदा सत्यवादी, धैर्यशाली, विद्यासु निपुणः, दयालुः, आस्तिकः पवित्राचरणयुक्तः, स्वाध्यायी, जितेन्द्रियस्य भवतिं स्म। मत्स्यपुराणे आचार्यस्य लक्षणमस्ति बुद्धः , लोभ, दम्भ, रहितः विनयशीलश्चेति। श्रीभाष्यकारः श्रीमद्रामानुजीचार्यः गुरूचयनप्रसङ्गे आहुः एवं सत्सन्तानप्रसूतसदाचारनिष्ठआत्मगुणोपेत, वेदविद् आचार्योपनीतस्य व्रतनियम विशेषयुक्तस्याचार्योच्चारणानुच्चारणमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते। इति।

गुरूः पक्षपातरहितस्सन् सर्वेभ्यः शिष्येभ्यः समानरूपेण विद्यादानं कुर्यात्। स अनुशासनम्प्रति जागरुकस्सन् इहलौकिकपारलौकिकपरम्पराविरूद्धकार्ये शिष्यानवरोधयेत्। आचार्यः शिष्यं प्रति स्नेहशीलः स्यात् । परन्तु कुमार्गगामिनः छात्रान् प्रति कठोर नियन्त्रणं स विदधीत्। तैत्तिरीयोपनिषदि शिक्षातल्यामुल्लिखितमस्ति यत् जीवनस्य विभिन्नादर्शानां कर्त्तव्यानाञ्च पालनं कुर्वन्तः स्वमुख्यकर्त्तव्यानां स्वाध्यायानां प्रवचनानाञ्च पालनं करणीयं शिक्षकैरिति। यथा– ऋतं च स्वाध्याय प्रवचने सत्यं च स्वाध्याय प्रवचने च।

प्राचीनकाले केवलमध्यापनमेव गुरोः कर्त्तव्यं नासीत् अपितु तेषां जीवनमेव छात्राणां कल्याणाय समर्पितं भवति स्म। गुरूः छात्रस्य मानसपिता भवति स्म, अतः नैतिकदृष्टया शिष्यस्य समस्तदोषाणामुत्तरदायित्वं तेषामेवासीत्। यथा– अतीत्यबन्धूनकलम्ब्य शिष्यानाचार्यमागच्छति शिष्यदोषः । इति।

शिष्याणां चरित्ररक्षणमपि गुरोः कर्त्तव्यमासीत्। अतः स शिष्यान् कर्त्तव्याकर्त्तव्यं, स्वास्थ्यरक्षणं, सङ्गतिः, अगम्यागम्यमित्यादिविषये च शिक्षयति स्म। यदि शिष्याः निर्धनाः तर्हि तेषां भरणपोषणस्योत्तरदायित्वमपि गुरोरेवासीत्। तेषां रूग्णावस्थायां गुरूरेव पितृसदृशं तेषां स्वास्थालाभाय सर्वविधप्रयत्नं करोति स्म। तदर्थं गुरुः महत्कष्टमपि सहते स्म।



एतत्सर्वमनुशीलनेन साधु अवगम्यते यत् प्राचीनभारतीयसंस्कृतौ अध्यापकेषु

निम्नोक्ताः गुणाः आसन्निति। ते च शिष्यस्य नूतनजन्मदाता, पराऽपराविद्यायाः ग्रहनाध्ययनकर्ता, अज्ञानान्धकारनिवारकः, ब्रह्मचारी, शिष्यस्य सन्मार्गद्रष्टा, स्नेहस्यागारः, आत्मविद्याज्ञानी, धर्मकर्मसुकुशलः, भौतिकताभिन्नः पुरूषः, कुशलवक्ता, कठिनं विषयं सारल्येन प्रतिपादनक्षमः, शुद्धाचरणम्, ज्ञानप्रेमी, निस्स्वार्थभावनया ज्ञानप्रदानकर्ता, शिष्यं पुत्रवत् अङ्गीकर्ता, पारलौकिकलैकिकज्ञानप्रदाता, संस्कृत्याः परिमार्जकः रक्षकश्चेति आसन्।

समाजस्य साम्प्रतिकपरिस्थितौ शिक्षकस्य निम्नोकताः गुणाः भवेयुरिति शिक्षाविदः वदन्ति। तद्यथा–छात्राणां चरित्रनिर्माणं, प्रभावोत्पादकरीत्या पाठनं, परिवारैः समाजैः सहसम्बन्धस्थापनम्, छात्राणां व्यावसायिकविकासः समाजस्य नैतिकस्तरोन्नतिः, छात्रप्रगत्या सहाभिभावकानां परिचयसम्पादनम् पाठ्यक्रमस्य विकासः दोषनिवारणाञ्च, कक्ष्यायाः सुप्रबन्धः छात्रेषु सहयोगभावविकासञ्च प्रभाविविद्यालय सम्पादनम्, छात्रेषु नेतृत्वगुणस्य राष्ट्रियभावनायाः सामाजिकभावनायञ्च विकासकरणमित्यादि। सर्वोपरि छात्रेषु विद्यमानस्यान्तर्निहितशक्तेः जागृतिः शिक्षकस्य परमं कर्त्तव्यं भवेदिति।

शिक्षायाः गुणात्मकविकासे अध्यापकः कुञ्चिका भवति । अध्यापकः राष्ट्रस्य भाग्यनिर्मातेति। शिक्षायाः उत्तरोत्तराभ्युन्नतये छात्राणां सर्वाङ्गीणविकासाय च शिक्षकः समाजस्य महत्त्वपूर्णमङ्गं वर्तते।

परिशीलित ग्रन्थाः–

1– उपनिषद्

2– निरूक्तम्

3– शिक्षायाः दार्शनिकाधारः

4– Teacher morale and student achievement , journal of Educational research.

# "आध्यात्मिकभूमौ रामतत्त्वम्"

सुरेश स्वामी
शोधच्छात्रः

मानवजीवनाय पुरूषार्थचतुष्टयं भारतीयमतानुसारेण नितान्तमावश्यकमस्ति। यतो हि अनेन एव साधकानां जन्ममरणचक्रं नश्यति, अतः प्राचीनकालाद् एव काव्येषु, वेदेषु, कथासु, महाकाव्येषु, नाटकेषु च पुरूषार्थ चतुष्टयं मानवकल्याणाय प्रतिपादयन्ति रचनाकाराः । उक्तञ्च भामहेन–

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिञ्च साधुकाव्यनिषेवणम्।।

आध्यात्मिकता–

भारतीयमतानुसारेण मानवस्य मूलप्रवृत्तिः आध्यत्मिकी अस्ति। आध्यात्मिकतायाः कारणादेव मानवः ज्ञानविज्ञानसाहित्यकलासदाचारधर्मेषु आत्मानम् अभिव्यनक्ति। आत्मनि इति अध्यात्मम्। "अधि" पूर्वकेण आत्मशब्देन निष्पन्नोऽयम् "अध्यात्मशब्दोः यथोक्तम् श्रीमद्भगवद्गगीतायाम्–

उद्धरेदात्मनाऽऽत्मानं नात्मानगसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।। (6.5)

आत्मा मनुष्यसत्तायाः आन्तरिकमर्मत्वेन विद्यते। अयं मनोऽहंकारबुद्धिभ्यः निर्लिप्तो भवति। आत्मनः शक्तिः इन्द्रियादिं प्रेरयति। इन्द्रियधर्माणां मनोविकाराणाम् अहंकारावच्छेदानाम् अतिक्रमेण अस्माभिः इदमात्मस्वपं ज्ञातुं शक्यते। यदा पूर्णरूपेण अहंकारस्य समाप्तिर्भवति तदैव आध्यात्मिकभावाः जाग्रति।

रामः–

वेदानामनुसारेण रामस्य उपमा राम एव अस्ति, नान्यः कोऽपि । वेदा अपि तेषां स्वरूपवर्णने असमर्थाः सन्ति। व्युत्पत्तिदृष्ट्या पश्यामः चेतः रमयत्याह्लादयतीति रामः। रमन्ते योगिनोऽस्मिन्निति रामः। उक्तञ्च–

रामस्तु व्यापकं ब्रह्म पुराणः पुरषोत्तमः।
परेशः परमानन्द इति जानन्ति तं बुधाः।।

आध्यात्मिकभूमौ रामतत्त्वम्–

"राम" इति शब्द एव बहुविशिष्टोऽद्भूतश्च वर्तते। वाल्मीकिना रामायणस्य युद्धकाण्डे उक्तम्–

अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघवः।

लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः।। (वाल्मीकि रा. 6.1.14)

श्रीरामः अस्याः सृष्ट्याः आदौ मध्ये अन्ते च विधते। राम एव लोके परधर्मत्त्वेन स्वीक्रियते । रामो हि चतुर्भुजविष्णो सर्वातिशायी अवतारः। "राम" इति पदं परमात्मनः वाचकमस्ति। ब्रह्मवैवर्तपुराणे उक्तम्–

"रा" शब्दो विश्ववचनो "म" श्चापीश्वरवाचकः।

विश्वानामीश्वरो यो हि तेन रामः प्रकीर्तितः।। (ब्रह्मवैवर्त. 111.18)

इत्यत्र "रा" इति वर्णसमूहः सम्पूर्णविश्ववाचकोऽस्ति। "म" इति वर्णसमूहः ईश्वरवाचकोऽस्ति। सर्वेषु प्राणिषु विद्यमानः परमात्मा एव राम उच्यते। अतः माण्डूक्योपनिषदि उक्तम्–

"ओमित्येतदक्षरम्" इत्यत्र ओम् एवं सर्वत्र व्यापकोऽस्ति। "ओम्" इति पदस्य निष्कर्षः "रामः" भवति।

रामकर्णामृतकारेण उक्तम्–

यन्नामसंसर्गवशादिवर्णौ नष्टस्वरौ मूर्ध्निगतौ स्वराणाम्।

तद्रामपादं हृदये निधाय देही कथं नोर्ध्वगतिं प्रयाति?।।

अर्थात् "हं" इति पदं महामृत्युञ्जयमन्त्रस्य बीजं वर्तते। तथैव "रं" इतिपदं अग्निदेवतायाः बीजमन्त्रोऽस्ति। गणितदृष्ट्या अपि अस्य शब्दस्य वैज्ञानिकता दृश्यते । यथा–

नाम चतुर्गुण पञ्चयुत द्विगुणीकृत बसु लेख।

रम्यो राम सब जगत में तुलसी यही बिसेख।।

रामनाम्नो महत्त्वप्रतिपादने उक्तम्–

राम रामेति रामेति रमे रामे मनोरमे !।

सहस्रनाम तत्तुल्यं रामनाम वरानने !।।

रामनाम्नः एकैकमप्यक्षरं महापातकस्य शमनकर्तृ अस्ति।

"एकैकमक्षरं पुंसां महापातकनाशनम्।"

सम्पूर्णरामशब्दस्य तु का वार्ता केवलं "र" इति शब्दात् आरभ्यमाणस्य कस्याऽपि शब्दस्य श्रवणमात्रेण चित्तम् आह्लादितं भवति । यथा–

रकारादीनि नामानि श्रृण्वतो मम पार्वति।

चेतः प्रसन्नतां याति रामनामाभिशङ्कया।।

तन्त्रानुसारेण बीजाक्षराणां विशिष्टं महत्त्वमस्ति। राम इति पदे विद्यमानः "र" वर्णः अग्नेः "आ" वर्णः आदित्यस्य "म" वर्णश्च चन्द्रस्य प्रतीकरूपेऽस्ति। बीजाक्षरेण मन्त्रशक्तिः

द्विगुणिता भवति। "राम" इति पदे बीजाक्षरं "रां" अस्ति। अतः बीजाक्षरसंयुक्तो "रां रामाय नामः" इति मन्त्रो महनीयो भवति। श्रीरामस्य नाम चिदानन्दमयमस्ति। यथा–

चिद्वाचको रकारः स्याद् सद्वाच्योऽकार उच्यते।
मकारानन्दवाची स्यात्सच्चिदानन्दमत्ययम्।। –महारामायणम् 52/53

अत्र रेफः चित्तस्वरूपस्य, अकारः सत्स्वरूपस्य, मकारः आनन्दस्वरूपस्य च प्रतिपादनं करोति। अर्थात् रामः सच्चिदानन्दमयोऽस्ति। "राम" इति पदं ज्ञानं वैराग्यं भक्तिश्चेति त्रयाणां प्रतिनिधित्वं करोति।

विज्ञानस्य रकारः स्यादकारो ज्ञानरूपकः।
मकारः परमा भक्ती रमु क्रीडायते ततः।।
रकारो हेतुर्वैराग्यं परमं यच्च कथ्यते।
अकारो ज्ञानहेतुश्च मकारो भक्तिहेतुकः।। महारामायणम्

राम एव अस्याः सृष्ट्याः संचालने समयोऽस्ति । यतोहि तस्मिन् पञ्चतत्त्वानां समावेशः दृश्यते।

आकांशस्याधिपो विष्णुरग्नेश्चैव महेश्वरी।
वायोः सूर्यः क्षितेरीशो जीवनस्य गणाधिपः।।

तदर्थमेव आध्यात्मरामायणे उक्तम्–

"रामः परमात्मा प्रकृतरजादिरानन्द एक पुरषोतमो हि।।"

देवताः अपि तस्य स्तुतिं कुर्वन्ति–

यदा यदा नो दनुजा हि दुःखदास्तदा तदा त्वं भुवि जन्मभाग्भवैः।
अजोऽत्ययोऽपीश वरोऽप सन्विभो स्वभावमास्थाय निजं निजार्चितः।।

वस्तुतः राम सम्पूर्णसृष्ट्यां देदीप्यमानप्रकाशवत् प्रतिभाति। श्रीसनत्कुमारसंहितायामुक्तम्–

रामः सत्यं परं ब्रह्म रामात् किञ्चन्न विद्यते।
तस्माद्रामस्य रूपोऽयं सत्यं सत्यमिदं जगत्।।

हिन्दीभाषायाः कविना कबीरदासेन अपि श्रीरामस्य विभिन्नरूपाणां गुणानां च वर्णनं क्रियते।

एक राम दशरथ का बेटा, एक राम घट–घट में बैठा।
एक राम का सकल पसारा, एक राम सब जग से न्यारा।।

तुलसीदासगोस्वामिने भयात् मुक्तिं ददाति जनेकयः। अतः जानकीजानिः कृते भगवत्प्राप्तिरेव जीवनस्य परमलक्ष्यं भवति।

रामभन्त्रस्य रां बीजे सीताऽऽकारात्मिकोच्यते।
भवभीत्यार्तजीवानां शरण्यैका तदाप्तये।। श्रीजानकी चरि. 4/24

रामतत्त्वस्य वैज्ञानिकता सिक्खजनानां पवित्रग्रन्थे प्रतिपादिताऽस्ति।

कर्म खण्ड की वाणी जोर।
तिथ्ये होर न कोई होर।।
तिथ्ये जोधां महाबल शूर।
तिज में राम रहा भरपूर।।
तिथ्ये सीतो सीता महिमा भाहे।
ताके रूप न कथने आहे।।
न ओह भरे न ठगते आहें।
जिनके राम बसे मन मांहें।। जंपुजी साहिब पौडि–36

सीता माया अस्ति, श्रीरामश्च ब्रह्म अस्ति। अस्यां सृष्ट्यां सर्वत्र ब्रह्मातिरिच्य किमपि तत्त्वं नास्ति। वर्तमाने कलियुगे प्राणिनां कल्याणं रामस्तुतिमात्रेण भवति। उक्तञ्च–

नामु राम को कल्पतरू कलिकल्यान निवासु।
जो सुमिरत भयो भॉग ते तुलसी तुलसीदासु।। रा.च.मा.1/26

अतः सर्वदा रामनाम्नः स्तुतिः विधेया –

राम जपु, राम जपु, राम जपु बावरे।
एक ही साधन सब रिद्धि–सिद्धि साधि रे।
राम–नाम कामतरू देत फल चारि रे।।
कहत पुरानं, वेद, पंडित पुरारि रे।।

विनय पत्रिका 66/1–2, 67/4

रामचरितमानसेपि तुलसीदासेन श्रीरामस्तुतेः महत्त्वं प्रतिफलं च वर्णितम्–

जासु नाम भव भेषज हरन घोर त्रय सूल।
सो कृपाल मोहि तो पर सदा रहउ अनुकूल।। रा.च.मा.7/124

निष्कर्षत्वेन वदामः चेद् आध्यात्मिकभूमौ रामतत्त्वस्य विवेचनं परब्रह्मत्वेन क्रियते। आध्यात्मिकग्रन्थेषु रामतत्त्वस्य विषयः बाहुल्येन उपलभ्यते। संस्कृतसाहित्यस्य हिन्दीसाहित्यस्य अन्यस्याः कस्याश्चापि भाषायाः आध्यात्मिकभूमौ रामतत्त्वस्य विवेचनं पर्याप्तम् उपलभ्यते। अतः वक्तुं शक्यते यत् अस्यां सृष्ट्यां रामतत्त्वमतिरिच्य अन्यत् किमपि तत्त्वं नास्ति। इत्यत्र नास्ति संशयः।

# "कक्षा–कंक्ष–शिक्षणे सूक्ष्मशिक्षणस्य उपादेयता"

विकास वर्धन भारती
शोधच्छात्रः

वस्तुतः शिक्षणं नाम छात्राणां व्यवहारेषु परिवर्तनानयनम्। अतः विद्यालय–विश्वविद्यालयोः छात्राणां व्यवहारपरिवर्तनं व्यवहारशोधनं वा भवति। यतोहि बालकेषु सर्वाः शक्त्यः जन्मजाताः एव भवन्ति, अतः विद्यालयेषु केवलं तासां शक्तीनां उत्तमरीत्या विकासः एव भवति। एवं च अस्मिन् विकासे अध्यापकाः सर्वप्रकारेण उपकारिणः भवन्ति। अत एव वक्तुं शक्यते अध्यापकाः राष्ट्रस्य निर्मातारो भवन्ति। शिक्षा नाम उत्तमगुणचरित्रयोः प्राप्तिः" इति स्वीकुर्मः तदा अध्यापकाः सद्गुणचरित्राणां प्रतिर्तयः भण्डारस्वरूपाः इत्यपि स्वकरणीयाः। यतः स एवाध्यापकः छात्रच्छात्रेषु सद्गुणचरिसंस्थापयितुं समर्थः प्रभवितुं अर्हति। यः स्वयं सद्गुणी भवति। एतदर्थं चिन्तनीयं भवति यत्– किम् अधुना अध्यापकाः स्वकर्तव्यनिर्माणे समर्थाः सन्ति? यदि न स्वीकुर्मः, तर्हि प्रश्नोऽस्ति यत् कारणं किमस्ति?

वस्तुतः अध्यापकेषु अध्यापनकौशलमस्ति चेत् ते कक्षायां छात्रेभ्यः उद्बोधने समक्षः भविष्यन्ति। परम् इदानीम् प्रचल्यमाना परम्परागत–शिक्षक–प्रशिक्षण–पद्धतौ महत्यो दोषाः परिलक्ष्यन्ते। एतदर्थमेव अस्मिन् पद्धतौ प्रशिक्षिताः अध्यापकाः समस्त–अध यापनकौशलेषु कुशालिनः न भवन्ति। अपि च यदि अध्यापकाः एव कुशलिनः न सन्ति तर्हि कुशलाध्यापनं कथं भवितुं शक्यते। प्रशिक्षणपाठ्यक्रमे शिक्षणाभ्यासः एव एकः अवसरः भवति यत्र प्रशिक्षुः–अध्यापकाः अध्यापककौशलानां प्रशिक्षणं प्राप्नुवन्ति। अपि च प्राचल्यमाने पद्धतौ शिक्षणाभ्याससमये पर्यवेक्षणस्य, निरीक्षणस्य, मार्गदर्शनस्य च अवसराः न प्राप्यते। फलस्वरूपः प्रशिक्षणार्थिनः एतेषाम् अभावे अध्यापन–कौशलेषु कुशलिनः न प्रभवन्ति।

अर्थात् छात्राध्यापकानां प्रशिक्षणावसरे सूक्ष्मापरीक्षणस्य आवश्यकता शिक्षास्त्रिभि अनुभूता। अस्य शिक्षणस्य (सूक्ष्मशिक्षणप्रविधेः) प्रयोजनं उद्देश्यं वा प्रशिक्षु–अध्यापकाना परिष्काराः प्रथमं सूक्ष्मशिक्षणमाध्यमेन महाविद्यालये विभिन्नेषु अध्यापनकौशलोषुः नैपुण्य वैशिष्ट्यं प्राप्य, ततः परं शिक्षणाभ्यासार्थं बृहत्या कक्षायाम् अध्यापनम् अध्यापनार्थं दक्ष कारणीयः। एवं प्रकारेण यदि सूक्ष्मशिक्षणस्य स्थानं प्रशिक्षणोपकरणेषु प्रमुखम् अधिकृत्य प्रयोगं कुर्मः तर्हि प्रशिक्षणं उत्तमं भविष्यति।

<u>सूक्ष्मशिक्षणस्य काश्चित् परिभाषा–</u>

एतेन इव च महोदयानामनुसारेण सूक्ष्मशिक्षणम् अल्पसंख्यकच्छात्रेषु



नियन्त्रितवातावरणेषु शिक्षणकौशलाभ्यासस्य यादृशी व्यवस्था अस्ति, यदाभ्यासेन विशिष्ट–

प्रशिक्षणव्यवहारेषु अवधानं भवति । एवम् अतिनियन्त्रितपरिस्थितौ शिक्षणाभ्यासः प्रवर्तते। Micro teaching is a system of controlled practice that makes it possible to concentrate on specific teaching behaviour and to pratice teaching under controlled conditions- Allen and eve. स्टैनफोर्डविश्वविद्यालयस्यानुसारो—सूक्ष्मशिक्षणमध्यापनस्य समये कक्षायाः आकारस्य समयस्य च न्यूनीकृतं परिमाणमस्ति। Micro teaching is a scaled down teaching encounter in class size and class time. Stanford University.

शिक्षाविश्वकोषस्यानुसारे—Micro teaching is a real, constructed, scaled down teaching encounter which is used for teacher training. Curriculm development and research. The Eney of Education.

सूक्ष्मशिक्षणस्य सोपानानि—

सूक्ष्मशिक्षणस्य प्रायः प्रयोगात्मकदृष्ट्या षट् सोपानानि एव सन्ति।

1— पाठयोजनम्

2— पाठशिक्षणम्

3— प्रतिपुष्टिः

4— पुनर्पाठयोजनम्

5— पुनर्पाठशिक्षणम्

6— पुनः प्रतिपुष्टिः

वर्तमानसमये सूक्ष्मशिक्षणमाध्यमेनाध्याप्यमाना कक्षा—

यस्मिन् विद्यालये सूक्ष्मशिक्षणस्य अध्यापनं भवति तत्र सूक्ष्मशिक्षणस्य कृते प्रमुखतया प्रकोष्ठद्वयं भवति। एकस्मिन् प्रकोष्ठे कक्षायाम् अध्यापनं भवति, अपरस्मिन् प्रकोष्ठे पर्यवेक्षकाः प्रर्यवेक्षणं कुर्वन्ति। अस्यां शिक्षणं निम्नलिखितानां उपकरणयन्त्राणामावश्यकता भवति।

विडिकॉन कैमरा (Vidicon camera) —

इदं चलित—छायाचित्र—यन्त्रं भवति। यन्त्रेऽस्मिन् (Zoom lens) जूम लेन्स भवति। अनेन यन्त्रेण चित्रस्य आकारं परिवर्तयितुं शक्यते। इदं यन्त्रं कक्षायाः सर्वेषां पार्श्वानां चित्रं ग्रहीतुं शक्नोति। अस्य लेन्स कक्षायां स्थापितं भवति।

2— विडियो—टेप—रिकॉर्डर—यन्त्रम्—

सूक्ष्मशिक्षास्य कक्षायां विडियो—टेप—रिकॉर्डर—यन्त्रद्वयस्य आवश्यकता भवति येषु यन्त्रमेकं प्रशिक्षणार्थीः अध्यापकानां कक्षायां द्वितीयं अध्यापककक्षे स्थापनीयं भवति येन छात्राध्यापकानां शिक्षणं रिकार्डिंग भवति।

3– मॉनीटर–यन्त्रम्–

प्रायः सर्वैः पाठ्यमानाः छात्राध्यापकानां शिक्षणम् अनेन यन्त्रेण रिकॉर्डिंग भवति। अतः शिक्षणस्य परिमाणे प्रयोगशालायाम् अस्ययन्त्रस्य आवश्यकता भवति।

5– अन्ये–सामग्र्यः–

सूक्ष्मशिक्षणस्य कक्षायां एता सामग्रयः अतिरिक्तमप्यनेक्रास सामग्रीणामावश्यकता भवति। यथा अवरोधनक्षमतायुक्तं घटिकायन्त्रं प्रकाशदीपानीव्यादीनि उपयुक्तानि उपकरणानि।

कक्षायां सूक्ष्मशिक्षणाध्ययनेन लाभाः

1– सूक्ष्मशिक्षणेन छात्राध्यापकानां व्यवहारेषु अवधानं केन्द्रितं भवति।

2– समुचितरूपेणास्य प्रविधेः प्रयोगः क्रियते, तर्हि इदमेकं सफला उपागमरूपयमकं भवति।

3– इदं वास्तविकं शिक्षणमस्ति यत् सामान्यकलाशिक्षणस्य काठिन्यं अपाकरोति।

4– अनेन शिक्षणेन शिक्षकप्रशिक्षणं वैयक्तिकं भवति।

5– अल्पव्ययसाध्यमस्ति। पर्यवेक्षकस्य समयः संरक्ष्यते शिक्षणे प्रभावशालिता वर्द्धते। छात्राणां विद्यालयानां कृते च विशेषभारसंयुक्ता न भवति।

6– अनेन प्रभावपूर्णं पयवेक्षणं करोति पर्यवेक्षकः स शिक्षणसमये छात्राध्यापकानां सामर्थ्यस्यासामर्थ्यस्य च सम्यक् मूल्याङ्कनं कर्तुं शक्यते।

7– अनेन शिक्षणेन छात्राध्यापका विविधकौशलानां पूर्वाभ्यासमाध्यमेन कौशलप्रयोगविषये दक्षः भवति।

8– सूक्ष्मशिक्षणस्योपयोगः प्रशिक्षणावधौ उपचारात्मकविधिरूपेण कर्तुं शक्यते, येन छात्राध्यापकाः स्वकीयं त्रुटीं दूरीकृत्य उत्तमं शिक्षणं कर्तुं प्रयतन्ते।

सूक्ष्मशिक्षणस्य न्यूनता–

1– सूक्ष्मशिक्षणस्य कृते लघुकक्षाकारः, अल्पसमयबद्धकक्षायाः निर्माणं अल्पसमये न भवितुं शक्नोति।

2– सूक्ष्मशिक्षणस्य प्रयोगशालायाः कृते उत्तमशिक्षणोपकरणानां सामग्रीणां तादृशी वातावरणानां व्यवस्था सर्वेषु शिक्षामहावि लायेषु न भवति।

3– अस्मिन् प्रशिक्षितानां पर्यवेक्षकानामावश्यकता भवति एव, सम्प्रति एतादृशानां पर्यवेक्षकानामभावः दृश्यते।

4– अस्य प्रयोगः उपचारात्मकप्रयोजनाय कर्तुं शक्यते, न तु सम्पूर्ण–शिक्षण–प्रक्रियारूपेण।

# "सनातनो धर्मः"

दुर्गेश प्रकाश झा
शिक्षाशास्त्री, अनु.१४

धृ धातोः निष्पन्नोऽयं धर्मशब्दः धारणार्थं प्रतिपादयति। अस्मिन् संसारे सर्वेषा द्रव्याणां संयोजनेन एकत्र धारणेन च जीवनस्य निर्वाहो भवति तदर्थं धर्मः प्रभवति यथा सूर्योदयेन सह धृतानि परमेश्वरेण निर्दिष्टानि कार्याणि कर्तुं प्रभवन्ति। विभिन्नमानस वृत्तीणां व्याप्तिभूतानां मानवानां एकत्र स्थित्यापादनेन एव समाजस्य समाजत्वं जायते, अतः समाजस्य धर्मे एव समाजस्य समाजत्वं जायते अतः समाजस्य धर्मे एव प्रतिष्ठा भवति, न केवलं मानवसमाजस्य, अपितु अखिलविश्वस्य प्रतिष्ठा धर्म एव।

"चोदना लक्षणो धर्मः" अत्र चोदना शब्दस्याभिप्रायो वर्तते प्रेरणा। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं जातीयकंमर्थम् अवगमयितुं शक्नोति । अपौरूषेयेण वेदेन प्रतिपादितत्वात् धर्मस्यापि अपौरूषेयता स्वतः सिद्धा। यथार्थं वस्तु धर्मः, न हि देशेन कालेन परिछिद्यते । यथोक्तम्– देशकालाभ्यं अपि छिन्नत्वं नाम धर्मत्वम्। धर्मस्य लक्षणं यथा–"यतः अभ्युद यक निश्रेयसः सिद्धि स धर्मः" श्रुत्या यानि कर्माणि विधिरूपेण प्रतिपादितानि तानि धर्म एव कथ्यन्ते । यानि कर्माणि श्रुत्या निषिध्यन्ते तानि अधर्म इति उच्चते । धर्मस्य विषये श्रीमद्भागवतमहापुराणस्य षष्ठे स्कन्धे महर्षि वेदव्यासेनोक्तं–

**वेद प्रणिहितो धर्मः अधर्मस्तदविपर्ययः।**
**वेदोनारायणः साक्षात् स्वयम्भूरिति शुश्रुमः।।**

अनेनैव ज्ञायते यद् धर्मस्य ज्ञाता बोद्धा भगवानेव।

**अपरञ्चोक्तं–**

धर्मस्तु साक्षात् भगवतप्रणीतं न वैविदुः ऋषयो नापि देवाः, न सिद्धमुख्या असुरा मनुष्याश्च विद्याधरचारणादयाः

**धारणात् धर्ममित्य षहु धर्मेण विधृता प्रजा।**
**य स्यात् धारण सयुक्तः स धर्मः इति निष्चयः।।**

धर्मस्य मूलम् श्रोतस्त अस्माकं चत्वारो वेदा वर्तन्ते। अत एवोच्यते – "वेदोऽखिलो धर्ममूलम्"। अतः धर्मस्याश्रयत्वात् इह लोके प्राणिनां सर्वतो भावे न विकासः संजायते अन्ते च मुक्तिपदं लभ्यते। सर्वेषां मनुष्याणां स्वभावमत्यादीनां सर्वम् एकस्येव धर्मस्यानुकूल्यं स्वीकुर्वन्ति परञ्च सर्वे समान योग्यता । भाजोऽपि नावलोक्यन्ते। तेषां वृत्तीनामनेकरूपत्वात् योग्यताम् अनुसृत्य निर्दिष्टो धर्मः सर्वत्र सर्वदाहितकारी श्रेयस्करश्च जायते। इह जगति धर्मस्तु एक एव विद्यते । स तु सनातनो धर्मः।

अनेके सम्प्रदायाः सनातन वैदिकधर्मस्याङ्गभूता एव सन्ति किन्तु अनेके मुस्लिमादयाः वैदिकधर्मस्य वैपरीत्यंभजन्ति परञ्च शिक्षिता यवनाध्यात्मिकभावनामया भवन्ति ते सनातनधर्मस्याध्यात्मिक भावनां बहुशः समानुकूल्य उक्तानि यथा–

धृतिः क्षमा दमोस्तेयं शौयमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दषकं धर्मलक्षणम्।।

सर्वत्र आचारविचाराणां नियामको धर्म एवास्ति । धर्मेणै इह जीवने पारलौकिक–जीवने सुखप्राप्तिर्भवति।अतः सर्वेषां कृते धर्मस्य पालन आवश्यकं कर्त्तव्यमस्ति। तदनुष्ठानैनैव मानवानां अभ्युदयः श्रेयः प्रेयश्य भवति। प्रिवर्गसाधनेतु धर्म एव प्रमुख रूपेण वर्तते। भारतीयासंस्कृतिः धर्मार्थ– कामानां परस्परं सन्तुलनमाश्रित्यैव विकासतां गच्छति ।

अनासक्ति रूपेण मनुष्यैः धर्मर्थकामाः संसेवनीयाः। साम्प्रतं सर्वे मानवाः अधिकारप्राप्यानन्तरं नैव कर्त्तव्यपालनं कुर्वन्ति अयमेव नितान्त श्येस्करः। सर्वे स्वाधिकारायैव प्रयत्नन्ते किन्तु स्वकर्तव्येषु अवहेलना परावलोक्यन्ते। वैदिकधर्मस्तु सर्वत्र कर्त्तव्य परायणतामेवोपदिशति। कर्त्तव्यनिष्ठा जनाः स्वाभीष्टाधिकारानपि स्वतः एवोपलब्धुं पारयन्ति। अस्माकं देशे जीवनयात्रायां सगुण देवतापुजनं निर्गुणोपासनायां तत्त्वमस्यादि वेदवाक्येषु लोकस्य निर्माण पालन लयाधारभूतस्य पर ब्रह्मणः सर्वव्यापकत्वं प्रतिपादयति। परन्तु निदेशीय सभ्यातासु समागतासु वैदेशिकः शासका अत्रागत्य कृतनीत्या धर्म–ध्वज नः एकमखण्डं मानवधर्मं शतखण्डीकृत्य धर्मान्धतायां विद्वेषस्य भाजनतां सम्प्राप्ताः । किन्तु धर्मस्य वैषि।ट्यं विद्यते यत् सर्वान् इस्लाम–ईशाय्यादिवैदेशिकधर्मा आत्मसात् कृत्य।

## "मातृभूमे नमः"

आशीष शर्मा
प्राक शास्त्री

मातृभूमे नमो मातृभूमे नमः
देवभूमे नमो देवभूमे नमः।।
मातृभूमे नमो मातृभूमे नमः
अग्रतस्ते नमः पृश्ठतस्ते नमः
दूरतस्ते नमः सर्वतस्ते नमः।।
मातृभूमे नमो मातृभूमे नमः
ते ऋषिभ्यो नमस्ते गुरुभ्यो नमः
ते जनेभ्यो नमस्ते बलिभ्यो नमः।।
मातृभूमे नमो मातृभूमे नमः
वेद–भूमे नमो देवभूमे नमः
कर्मभूमे धर्मभूमे नमः।।
मातृभूमे नमो मातृभूमे नमः
ते गिरिभ्यो नमस्ते नदीभ्यो नमः।
विन्ध्य–हिमराज–कैलाश–भूमे नमः।।
मातृभूमे नमो मातृभूमे नमः

# "आधुनिकशिक्षायां प्रयोजनवादस्य उपादेयता"

विवेकमिश्र
शिक्षाशास्त्री, अनु.२३

सृष्टौ तु रचना बहव्यः जाताः परञ्च तत्रानुसन्धानस्यावश्यकता प्रतीयते एतदेव पुनारचनात्वेन कथ्यते। यथा रचनायाः यत्र सीमितता भवति तत्र रचनायां पुनारचना परमावश्यकी।

अर्थ–

"प्रयोजनमनुददिश्य न मन्दोऽपि प्रवर्तते" इति वचनमनुसृत्य प्रयोजनाधारितोऽयं वादः "जानड्यूवी" महोदयेन संस्थापितो वर्तते। ड्यूपी महोदयः (1859–1952 ई.) शिकागो विश्वविद्यालये प्राचार्यः आसीत्। वादेऽस्मिन् सर्वं व्यवहारेऽन्तर्निहितमस्ति। अतोऽस्य व्यवहारवादः, फलवादः, साधनवादः, पुनारचनवादः, प्रयोगवादः, अनुभववादः इत्यादीनि नामानि सन्ति । प्राणिषु अनुभवः नितरामावश्यको भवति अतोऽत अनुभववादत्वेन वादोऽयं जायते।

आधुनिकशिक्षायाः व्यवस्था समीचीना अस्ति, परन्तु तत्र व्यवहारस्य, अनुभवस्य, प्रयोगस्य, साधनस्य च व्यवस्था समीचीना नास्ति। यतो हि जानड्यूवीमहाशयः स्वपुस्तके, "व्यवहारे सर्वं प्रतिबिम्बमस्ति अतः फल प्राप्तये व्यवहारः करणीयः।" व्यवहार इत्युक्तेः कार्यं करणीयमिति लिखति।

प्रयोजनवादः (Pragmatism) शब्दस्योत्पत्तिः यूनानदेशीयग्रीकभाषायाः Pragmaticos इति शब्देनाभवत्। अस्याऽर्थो भवति जीपदह done, business, effective action (कार्यं, व्यवसायः, प्रभावोत्पादकं कार्यं) पुनश्च (Pragmatism) शब्दस्योत्पत्तिः लैटिनभाषायाः (Pragmaticus) शब्देनापि अभवत्। यस्यार्थो भवति–व्यावहारिकता।

परिभाषा–

प्रयोजनवादः वस्तुतोऽर्थस्य सत्यज्ञानस्य वास्तविकतायाश्च सिद्धान्तान् ज्ञापयति।
– जेम्सप्रेट महोदयः

प्रयोजनवादः मस्तिष्कस्य स्वभावं दृष्टिकोणञ्च ज्ञापयति। वादोऽयं सत्यस्य विचारप्रकृतेश्च सिद्धान्तः। अपरञ्च वादः वास्तविकं सिद्धान्तं प्रकटयति।– विलियमजेम्स महोदयः

अतः मूलतः वादोऽयं ज्ञानवादी विचारधारानुरूपं अनया विचारधारया सत्यस्याकलनं तदीयव्यावहारिकपरिणामैरेव ज्ञातुं शक्यते। अतः सत्यस्याकलनं सत्यान्वेषणया अङ्गीकृत्य

वैयक्तिकं सामाजिकञ्च वस्तु किमपि अङ्गीक्रियते।

## प्रयोजनवादस्य दार्शनिकदृष्टिकोणम्–

1– तावदर्शनाधारिता प्रयोजनवादस्य उपादेयता।

2– ज्ञानस्थाने प्रयोजनवादः।

3– मूल्यमीमांसायां प्रयोजनवादः।

4– शिक्षायां प्रयोजनवादः।

प्रयोजनवादस्य रूपाणि– Forms of Pragmatism

1– मानवतावादी प्रयोजनवादः–

प्रयोजनवादोऽयं सर्वाधिकलोकप्रियः अस्ति। आधुनिकशिक्षासन्दर्भे एतदनुसृत्य मानवप्रकृतिं पूर्णरूपेण सन्तुष्टिं प्रदातुं सत्यमस्ति। आधुनिकशिक्षायां तु मानवतायाः प्राथमिकरूपेण आवश्यकता सम्प्रति परिदृश्यते।

**2– प्रयोगवादी प्रयोजनवाद–**

अस्य आधारः विज्ञानप्रयोगशालाविधयः सन्ति। एतदनुसृत्य यद् वस्तु प्रयोगेण सत्यं साधयितुं शक्यते तदेव सत्यमस्ति, वा यद् वस्तु सम्यग्रूपेण कार्यं करोति तदेव सत्यमस्ति।

**3– नामरूपवादीः प्रयोजनवादः–**

वयं कमपि प्रयोगं कुर्मः तर्हि तत्परिणामं पश्यामः। प्रयोगकर्तुः दृष्टि शोधपूर्णा आशापूर्णा च भवति। यद्यत्र वदामः–"उद्यानस्य रक्तपुष्पं" इति तर्हि अनेन अस्माकमभिप्रायोऽस्ति यद् यदि वयं उद्याने गच्छेम तर्हि तत्र रक्तपुष्पं" पश्येम।

**4– जीवविज्ञानवादी प्रयोजनवादः–**

आधुनिक समयेऽस्य वादस्य स्थानं वर्धतेतराम्। अस्य प्रमुख प्रतिनिधिः जानड्यूवी महोदयः विधते। तमनुसृत्य–अस्य प्रयोजनवादस्य परीक्षा मानवस्य स्वगतावरणानुकूलस्य विचारप्रक्रियया सह क्रियते।

## प्रयोजनवादस्य प्रमुखाः सिद्धान्ताः–

**Main principles of pragmatism**

आधुनिकशिक्षासन्दर्भे –

1– ज्ञानं तथा मस्तिष्कं स्वतः साध्यत्वेनाङ्गीक्रियते।

2– विचारः मस्तिष्कस्य क्रियामात्रम्। मानवमस्तिष्कं तावत् क्रियाणां सञ्चालने साधनमात्रम्।

3– विचारः कर्मणा प्रादुर्भवन्ति, अतः कर्मद्वारा एव ज्ञानप्राप्तिः भवति।



4– ये सिद्धान्ताः कार्यं कुर्वन्ति, ते सत्या सन्ति।

5– वादोऽयं पूर्णमानवीयरूपो विद्यते।

**शैक्षिकसिद्धान्ताः–**

1– शिक्षैका सामाजिकी प्रक्रिया विद्यते।

2– वादेऽस्मिन् बालकीयक्रियासु स्वप्रयत्नेषु प्रभावो भवति।

3– प्रयोजनवादे सामाजिकभौतिकवातावरणयोः उपरि प्रभावो भवति।

प्रयोजनवादे शिक्षोद्देश्यानि–

(Aims of Education in Pragmatism)

वादमनुसृत्य शिक्षायाः उद्देश्यानि स्थायीरूपेण न निर्धारयितुं शक्यन्ते। तेषु समयावश्यकतयोः ध्यानं दत्वा परिवर्तनं कर्तुं शक्यते। अत्र जानड्यूवी शिक्षोद्देश्यानां विशिष्टतात्रयं परिगणितवान्–

इमानि छात्रसहायोगं प्राप्नुवन्ति। एतानि छात्राणां क्रियाऽऽवश्यकतानामुपरि आध ारिताः भवन्ति। एतानि विशिष्टतात्कालिकानि भवन्ति। इत्थं उद्देश्यानि–

1– बालकः स्वमूल्यादार्शयोर्निमाताः विद्धते। एतदर्थं योग्यताप्रदानं करोति प्रयोजनवादः।

2– सामाजिककुशलता अस्योद्देश्यं प्रमुखत्वं सम्पादिमत्र वादे–

निष्कर्षः–

आधुनिकशिक्षायां, विविधदोषभूते सत्यपि प्रयोजनवादः शिक्षाक्षेत्रे क्रान्तिवादत्वेनाभिज्ञायते। एतदनन्तरं शिक्षां प्रति जनदृष्टिः परिवर्तिता। अद्यतन शिक्षायां प्रयोजनवादः सादर्शत्वेन मन्यते। शिक्षायोजनानिर्माणे प्रयोजनवादस्य साहाय्यमपरिहार्यम् अस्ति इति।

सहायकग्रन्थाः –

1– शिक्षा समाजशास्त्र– डॉ.एस.पी.गुप्ता व डॉ. अलका गुप्ता

2– शिक्षा अनुसन्धान– आर.ए.शर्मा–विनय रखेजा बुक डिपो मेरठ–2012

3– शिक्षायाः दार्शनिका धारा– डॉ. किशोरी रमण झा–लखनऊ, 2004

4– विश्व के श्रेष्ठ शिक्षा शास्त्री, डॉ. राम शकुल पाण्डेय, श्री विनोद पुस्तक मन्दिर आगरा–2, 2012

# "अलङ्कार–विवेचनम्"

दयानिधि मिश्र
शिक्षाशास्त्री, अनु.१०७

अलं करोतीति अलङ्कारः "आभूषितं करोतीति अलंकारः। अलं+कृ धातोः घञ् योगेन अलंकारशब्दः सिद्धयति। लेटिन भाषायां अलंकारशब्दस्यार्थः Aurum सोना विद्यते। आभूषित–करणमेव अलंकारः। अलंकारः काव्यस्य महत्त्वपूर्णमङ्गं वर्तते। अलंकृतिरलंकारः। "काव्य–सौन्दर्यस्य विधायकानां–सम्पूर्ण–तत्त्वानां विवेचनशास्त्रमेव अलंकारशास्त्रम्"। अलंकारस्य त्रयो भेदाः (1) शब्दालंकारः (2)अर्थालंकारः, (3) उभयालंकारश्चेति मन्यन्ते।" **शब्दार्थौ सहितौ काव्यम्"** इति भामह–कथनेन स्पष्टं भवति यत् "सत्यं शिवं सुन्दरम्" इत्यत्र चरमतत्त्वं सुन्दरमेव वर्तते। शिव–सुन्दरयोश्च यदा सत्येन सह संयोगो भवति, तदा संसारे मङ्गलोदयः भवति। ते आचार्या गुण–रस–रीति–भावादि विषयाः अलंकारस्य अन्तर्गते मन्यन्ते। भगवान् शंकरः अलंकारशास्त्रस्य शिक्षणं प्रथमं ब्रह्मणे दत्तवान् ब्रह्मा च देवेभ्यः कविभ्यश्च ऋषिभ्यश्च तच्छिक्षा ददौ तदनुसृत्याष्टादश ब्रह्मशिष्या अष्टादशस्वाधिकरणेषु शास्त्रमिदं निबद्धवन्तः। नन्दिकेश्वरो रसम् धषणो दोषान्, उपमन्युर्गुणान, भरतश्च रूपकाणि निरूपितवान्तः । अलङ्कारो नाम सौन्दर्यम्, यथा कटक – फुण्डल–हारादिभिः आभूषणैः कामिन्याः सौन्दर्यवृद्धिः भवति। तथैव अनुप्रास–उपमादिभिः अलङ्कारैः कविताकामिन्याः शोभावर्द्धनं क्रियते। येन कविता कामिनीकुरूपासत्यपि सौन्दर्यं प्राप्नोति।

अलङ्कारस्यलक्षणम्–

आचार्यमम्मटेनापि उच्यते–

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।।

कविराजविश्वनाथोपि कथितवान्–

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारस्तेऽङ्गदादिवत्।। साहित्य दपर्णम् ।

ये शब्दार्थयोरनित्यधर्मत्वेन अतिशयशोभा कारेणः रसादीन् उपकुर्वन्ति, ते कालो अलङ्काराः। शरीरे यथाकटककुण्डलादीनां बाह्यशोभाऽऽधायकानाम् आत्मनः परोक्ष धर्मत्वम्, तथैव कालो अनुप्रासोपमादीनाम् अलङ्काराणाम्।

सन्दर्भग्रन्थसूचि–

1– संस्कृत शिक्षण, डॉ. उदय शंकर झा , चौखम्बा संस्कृत भवन
2– साहित्य दर्पण, विश्वनाथ
3– रसगङ्गाधर, पं. राज जगन्नाथ ।

# "संस्कृतभाषायाः आवश्यकता"

चक्रपाणि शर्मा
शिक्षाशास्त्री, अनु.१२

भाष्यते मनोगतमभिव्यज्यते इति व्यूत्पत्या भाष् व्यक्तायां वाचि इत्यर्थकाद्धातोः "गुरोश्चहलः" इति सूत्रेण अ प्रत्यये स्त्रियां टापि भाषा इति शब्दः निष्पद्यते। प्रयुक्तानां व्यक्त्यन्तरावगमनयोग्यानां सार्थकशब्दानां समुच्चयः एव भाषेत्यर्थः। अतः प्राणिमात्रैः पश्वादिभिः इयं प्रयुक्ता चेदपि तत्र किमपि अर्थवैशिष्ट्याभावात् सा भाषात्वेन न परिगण्यते। भाषा तु ध्वनेः विकसितं रूपं भवति, यदर्थः व्यक्तरूपेण जल्पनम् इति। भाषायाः प्रादुर्भावः बहुप्राचीनकालादभूत् इति ज्ञायते न कश्चिज्जानाति अस्याः अभ्युदयकालम्। मानवसभ्यतोदये इयं सङ्केतरूपिणी एवासीत् । सभ्यतायाः क्रमिकविकासेन भाषायाः अपि विकासः समजायत। मानवी भाषा तुरीयया वैखर्या अभिव्यज्यते तदुक्तम् –

"चत्वारि वाक्यपरिमिता पदानि तानि विदुर्ब्राह्मणा य मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" ।।

महाभाष्यम् पस्पशाहिबकम्

शाब्दिकानां परा–पश्यन्ती–मध्यमा–वैखरी वाक्षु वैखर्या वाचा प्रकाशमाना परक्षेत्रश्रवणगोचरीभूता भाषेयं परस्परं भावाभिप्रायविनिमयक्षमा, अन्योन्यप्रयोजनसम्पादनसाधना चेति स्तूयते।

क्षणं प्रकल्प्यतां स्मृतिपथे भाषाविहीनं जगत् कीदृशं प्रवर्ते इति। न तत्र विचारविनिमयः। न वा नरीनृत्यते सम्प्रेषणपाटवम्। न च ज्ञानादानप्रदानम्। नापि मनोरञ्जनम्। नास्त्येव ज्ञानविज्ञानगोष्ठी। न वा परस्परसम्पर्कसम्बन्धौ । न वा लिपिः नापि साहित्ये

समुपसर्गपूर्वकात् डुकृञ करणे इत्यर्थकाद्धातोः संस्क्रियते इत्यर्थे क्त प्रत्यये "सम्परिभ्यां करोतौ भूषणे" इति सुडागमे संस्कृतशब्दस्य व्युत्पत्तिः भवति। यस्यार्थः भवति परिष्कृतं परिशुद्धं व्याकरणादिदोषरहितं यत् तद् संस्कृतम्। या विश्वस्य प्राचीनतमा, सुमधुरा, सुललिता विपुलसाहित्योपेता च वर्तते। एषैव भाषा देवभाषा, देववाणी, गीर्वाणवाणी, गीर्वाणगीः, सुरभारती इत्यादिभिः नामधेयैः व्यवह्रियते। भारतीयानां विश्वासानुसारं सृष्टिकर्तुः ब्रह्मणः मुखात् वेदमयी संस्कृतवाणी निःसृता।

अनादिनिधना नित्या वागुत्सृष्टामस्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।

भारतीयदर्शनस्य धर्मस्य संस्कृतेश्च भाषारूपेण संस्कृतस्य महत्त्वमनिर्वचनीयमस्ति। बौद्धिकभावात्मकाध्यात्मिककलात्मकानिपरेः निरन्तरम् संस्कृतभाषा सामान्यजनजीवनस्य

अन्तर्वाहिनी वर्तते। उच्यते च–

सर्वासामपि भाषाणां जननं जीवनं यतः।
भासते संस्कृतं तेन शरीरस्य यथाऽसवः।।

संस्कृतभाषायां नाम संस्कृतम् इत्यत्र मानं–

यदि वाचं वदिष्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति।।

वाल्मीकिरामायणं–सुन्दरकाण्म्

इत्येतादृशस्याध्यात्मतत्त्वस्य सारस्य विभिन्नगुणसम्पन्नेयं भाषा आदिकाव्ये रामायणे स्वकीयं व्यावहारिकरूपस्य प्रमाणं प्रददाति। अतः संगणकोपयोगिन्याः सर्वभाषाजनन्याः अस्याः व्यवहारिकप्रयोगस्य आवश्यकता स्वप्नः कस्मैश्चित् कल्पयते। इयं भाषा यद्यपि अल्पजनैः अवगन्तुं शक्यते तथापि समाजे प्रतिष्ठां धारयति । सा च सांस्कृतिकी भाषा "संस्कृतम्" वर्तते।

सन्दर्भग्रन्थसूची–

1– आरण्यकम्–संस्कृतप्रचारपरिषद्, मारूतिमन्दिरम् प्रकाशपुरी, आरा बिहार–802301

2– संस्कृतविमर्शः राष्ट्रियसंस्कृतसंस्थानम्, 56–57 इन्स्टीट्यूशनल एरिया, जनकपुरी, नवदेहली–110058

3– प्रो. (डॉ.) सन्तोषमित्तलः संस्कृतशिक्षाम्, नवचेतना पब्लिकेशन्स, जयपुरम्–2013

# "ज्योतिषे वनस्पतीनां महत्त्वम् उपयोगश्च"

राजन कुमार दुबे
शिक्षाचार्य, अनुक्रमाक ५

ज्योतिषे वनस्पतीनां वर्णनं तथा तस्य उपयोगविषये विस्तृत रूपेण वर्णनं वर्तते। ग्रहनक्षत्राणां वनस्पतिरत्नादिमध्ये घनिष्ठः सम्बन्धः वर्तते। प्रत्येकं ग्रहनक्षत्रैश्च सम्बन्धितवनस्पतीनां जातकस्योपरि प्रभावं दरीदृश्यते। अनेन कारणेन रोगानां निवारो वनस्पतीनामपि प्रयोगः क्रियते। यदि रोगे नक्षत्रस्य प्रभावो वर्तते, तर्हि तद् नक्षत्र सम्बन्धितवनस्पतीनां प्रयोगः क्रियते । ज्योतिषे सर्वेषु नक्षत्रेषु क्रमेण वनस्पतीनां वर्णनं वर्तते । यथा–

| | | | |
|---|---|---|---|
| 1– | अश्विनी | → | कुचला |
| 2– | भरणी | → | आमलकम् |
| 3– | कृत्तिका | → | गूलर |
| 4– | रोहिणी | → | जम्बूफलम् |
| 5– | मृगशीरा | → | कत्था |
| 6– | आर्द्रा | → | कृष्णकमलम् |
| 7– | पुनर्वसु | → | पुष्प,पीपल, बबूल |
| 8– | अश्लेषा | → | " " |
| 8– | पुष्य | → | चम्पा |
| 9– | मघा | → | बरगद |
| 10– | पूर्वाफाल्गुनी | → | अशोकः |
| 11– | उत्तराफाल्गुनी | → | खेजड़ी |
| 12– | हस्त | → | जूही |
| 13– | चित्रा | → | श्रीफलम् |
| 14– | स्वाति | → | अर्जुन |
| 15– | विशाखा | → | नागकेसर |
| 16– | अनुराधा | → | " " |
| 17– | ज्येष्ठा | → | नीम |
| 18– | मूल | → | श्रीपफलम् |
| 19– | पूर्वाषाढ़ा | → | आक |
| 20– | उत्तराषाढ़ा | → | कटहल(पनसम्) |
| 21– | श्रवण | → | आक |

| | | | |
|---|---|---|---|
| 22– | धनिष्ठा | → | नारिकेल |
| 23– | शतभिषा | → | आम्रम् |
| 24– | पूर्वाभाद्रपद | → | कदम्ब |
| 25– | उत्तराभाद्रपद | → | मेंहदी |
| 26– | रेवती | → | बदरी |

उपर्युक्तवनस्पतीनां प्रयोगः नक्षत्रजन्यरोगदोषनिवारणाय क्रियते। अनेनैव सर्वेषा ग्रहाणामपि वनस्पतीनां वर्णनं वर्तते । यथा–

| | | | |
|---|---|---|---|
| 1– | सूर्यः | → | अर्कः (मदार) |
| 2– | चन्द्रमाः | → | पलाशः |
| 3– | मङ्गलः | → | खदिरः (खैर) |
| 4– | बुधः | → | अपामार्गः |
| 5– | गुरूः | → | पिप्पलः |
| 6– | शुक्रः | → | गुलरः |
| 7– | शनिः | → | शमिः |
| 8– | राहुः | → | दूर्वाः |
| 9– | केतुः | → | कुशः |

---

सन्दर्भ ग्रन्थ सूची–

1– बृहत्संहिता श्रीवराहमिहिराचार्यः
2– मुहूर्तचिन्तामणिः श्रीरामाचार्यः
3– हृर्षकेशपञ्चाङ्गम्

# "शिक्षादर्शने यथार्थवादः"

करूणेश कुमार शुक्ला
शिक्षाचार्य, अनुक्रमाक ४

अस्याः विचारधारायाः उत्पत्तिकालः षोडशशतादयां विद्यते, पुनश्च सप्तदशशताब्धामस्याः स्पष्टीकरणमभवत्। आदर्शवादीमानवः देवतुल्यस्तु भवितुमर्हति परञ्च मानवः आदर्शेन स्वसामान्यावश्यकतायाः पूर्ति न कर्तुमर्हति अतः तासां आवश्यकतानां पूर्तये यथार्थवादस्य प्रादुर्भावः समभूत्।

भारतस्य प्राचीनषट्त्सु दर्शनेषु न्यायवैशेषिकदर्शने यर्थाथवादस्य समर्थनं भवति। गौतमन्यायसूत्रमतमबलम्ब्य प्रमाणशब्दस्योत्पत्तिः "प्रमा" इति शब्देन जाताः। प्रमायाः अर्थः यथार्थज्ञानमनुभवो वास्ति।

**यथार्थवादस्य अर्थ –**

यथार्थवादशब्दः आँग्लशब्दः Realism इत्यस्य हिन्दीरूपान्तरोऽस्ति Real शब्दस्योत्पत्तिः ग्रीकभाषायाः Res शब्देन जाताः यस्यार्थः विद्यते – "वस्तु"। अतः Realism इत्यस्यार्थः वस्तुगतविचारधाराः भवति। वादोऽयं वस्तुनः अस्तित्वसम्बन्धिविचारान् प्रति दृष्टिकोणं विद्यते, यः प्रत्यक्षरूपेण जगत् सत्यं मन्यते। आदर्शवादमनुसृत्य सत्यस्य निवासः मानवमस्तिष्के विद्यते परञ्च यथार्थवादमनुरुध्य सत्यस्य निवासः भौतिकजगतः वास्तविकवस्तुषु घटनाषु च विद्यते।

**यथार्थवादस्य परिभाषाः–**

ब्राउनमहोदयानुसारम्– "यथार्थवादस्य मुख्यविचारः अयं विद्यते यत्सर्वाणि भौतिकवस्तूनि वास्तविकानि सन्ति। तेषां अस्तित्वं दर्शनदृष्ट्या भिन्नमस्ति । यदि तद्दर्शकाःन स्युत्पदापि तस्यास्तित्वं भविष्यति एव।"

स्वामिरामतीर्थमतानुसारम्–

"यथार्थवादस्य अर्थ स सिद्धान्तो विद्यते यः जगत् तादृशमेव स्वीकरोति यथा जगत् वयं पश्यामः।"

यथार्थवादस्य समर्थकाः–

जॉन लॉक, हरबर्ट स्पेन्सर, जानमिल्टन, फ्राँसिसबकेन, माइकेल डी. माण्टेसरी इत्यादयः।

**शिक्षायां यर्थावादरूपाणि–**

1– मानवतावादीयथार्थवादः
2– सामाजिक यथार्थवादः
3– ज्ञानोन्द्रिययथार्थवादः
4– वैज्ञानिकयथार्थवादः

यथार्थवादे शिक्षोद्देश्यानि–

शिक्षोद्देश्यानि शैक्षिकमूल्याधारोपरि आधारितानि सन्ति। मूल्यविषये यथार्थवादिन वस्तुनिष्ठदृष्टिकोणं विद्यते। वस्तुनिष्ठदृष्टिमवलम्ब्य उद्देश्यानि बहूनि भवितुमर्हन्ति तद्यथा बालकानां कृते समाजस्य पूर्णज्ञानप्रदानकरणम्। येन स सामाजिकपरिस्थितिसंघटन–प्राकृतिकवातावरणानां च ज्ञानं प्राम्य स्वं तदनुकूलं निर्मीयत् बालकः केवलं विद्वान् एव न भवेत् अपितु स व्यावहारिकजीवनेऽपि निपुणतामधिगच्छेत् बालकस्य ज्ञानिरूपेण निर्माणस्य तात्पर्यमस्ति तस्मिन् विवेकगुणस्य समावेषः। बालकाय स्पष्टवास्तविकपदार्थानां ज्ञानं दातव्यम्, येन सः इन्द्रियाधिगतसामग्रीणां विश्लेषं कृत्वा तर्कविकतर्काभ्यां सत्यज्ञानं प्राप्येत् ।

यथार्थवादस्य दार्शनिकदृष्टिकोणम्–

**दार्शनिकदृष्टिकोणे त्रयः विभागाः सन्ति–**

क– यथार्थवादमनुसृत्य ब्रह्माण्डस्य रचना गतिशीलपदार्थेन जाता। यत्र जगति वयं निवसायः, सः वास्तविकतायाः निर्माणं करोति। वयं स्वानुभवानां आधारोपरि अस्य जगतः नियमिततां ज्ञातुं शक्नुमः, येषां सम्बन्ध सामाजिकीकरणं कर्तुं शक्यते, अपि नियमस्तरप्रदानं कर्तुमर्हति।

**ख–ज्ञानशास्त्रे यथार्थवादः–**

यथार्थवाददिनमनुसृत्य वास्तविकजगतः अस्तित्वमस्ति। वयं वास्तविकवस्तु जानीमः यतो ह्यस्य वास्तित्वमस्ति। वयं वक्तुं शक्नुमो किमपि वस्तु सत्यमस्ति यतो हि तस्यास्तित्वं वास्तविक जगति, विद्यते, अत्र वादे विश्लेषणाय बलं दीयते। तमनुसृत्य ज्ञानापूर्वं ज्ञाताद्वेषयोः अस्तित्वं विद्यमानं तिष्ठति।

**ग– तर्कशास्त्रे यथार्थवाद–**

यथार्थवादिनः प्राकृतिकनियमेषु विश्वसन्ति, ते प्रकृतिव्यवस्थितव्यवहारे सौन्दर्यस्य अन्वेषण कुर्वन्ति। एवं च सौन्दर्यपूर्णकलाकार्यं ब्रह्माण्डस्य प्रकृतेर्वा व्यवस्था तर्कस्य च प्रतिछाया विधते। अतः कलाप्रकृतिव्यवस्थां प्रतिबिम्बितं व्याख्या वा करणीया।

सन्दर्भग्रन्थसूचीः–


1– शिक्षायाः दार्शनिक आधारः, डॉ. सोमनाथ साहू, विनोद पुस्तक मन्दिर, आगरा–2006

2– शिक्षा के दार्शनिक तथा सामाजिक अधार, डॉ. एस.एस.माथुर, आगरा प्रकाशन, संस्करण–2008

3– शिक्षा के समाजशास्त्रीय आधार, आर. के. शर्मा, संस्कर, 2006

4– शिक्षायाः दार्शनिक आधारः, डॉ. किशोरीरमण झा, लखनऊ प्रकाशन–2012

# संतोषः परमं धनम्

राकेश कुमार
प्रा.शास्त्री प्रथम वर्ष

संसारे सर्वे जन्तवः विशेषतः मानवाः स्वजीवनं सुखयुक्तं कर्त्तुमिच्छन्ति, परं यत्ने कृतेऽपि सुखं न लभते। प्रतिदिनं तेषां कामनाप्रवृतिः वर्धत एव । यदा कामना न पूर्यते तदा ते महद्दुःखानि अनुभवन्ति।

पुरा यदा सुखसाधनानि स्वल्पानि एव आसन् तदा सोऽधिकः सुखयुक्त आसीत्। अस्य पुरुषस्य एकमात्रं कारणम् इदम् आसीत् यत् स यानि किञ्चत्मात्रसाधनानि प्राप्तवान् तैरेवं साधनैर्मनः सन्तोष्येति स्म। सन्तोषेणैव प्रसन्नताम् अनुभवति स्म। सत्यमेवोच्यते–

"सन्तोष अमृततृष्तानां यत् सुखं शान्तचेतसाम्।
कृतः तत्धनलुब्धानाम् इतस्ततष्च धावताम्"।।

अतः ये जनाः संतोषं न आश्रयन्ते, ते सर्वदा दुःखिता एव भवन्ति। यतो धनलिप्साः तान सर्वदा पीडयन्ति। यदि पुरुषः सन्तोषस्य आश्रयं स्वीकुर्यात् तदा सः दुःखानां कष्टानां च पात्रे न भवेत्। विदुशां वचनं इदम् सत्यम्–

"सन्तोषः परमं सुखम्"

अतः मनुश्येण स्वजीवने सदैव तादृशः उद्योग कर्तव्यो यत् सः स्वभावेनैव सन्तोषी भवेत्। मनुष्यः पश्यति यत् संसारे दृष्यमानं प्रत्येकं वस्तु क्षणभंगुरम् अस्ति तथापि क्षणभंगुरवस्तुने स्पृहयति एव।

# "स्वधर्मस्य पालनम्"

नीरज कुमार द्विवेदी
शिक्षाचार्य, अनुक्रमाक २४

प्राचीनकाले एकः राजा आसीत्। तस्य राज्ये यदा कश्चित् सन्यासी आयाति स्म, तदा स सर्वदा एकमेव प्रश्नं पृच्छति स्म, यत् संसारं त्यक्त्वा यः सन्यासं स्वीकरोति स श्रेष्ठः अस्ति अथवा यः संसारे निवासं कृत्वा गृहस्थस्य कर्तव्यानां पालनं करोति स श्रेष्ठः वर्तते। नैकाः विद्वांसः: तस्य अस्य प्रश्नस्य उत्तरदानस्य प्रयत्नं कृतवन्तः। यदा केचन् बोधितवन्तः यत् सन्यासाश्रमः श्रेष्ठः वर्तते, तदा एतत् श्रुत्वा राजा तेन एतां वार्ता सिद्धं कर्तुम् अकथयत्। यदा ते सिद्धं कर्तुं न शक्नुवन्तः तदा राजा तान् विवाहं कृत्वा गृहस्थो भवितुं निर्देशं दत्तवान्। अनन्तरं केचन विद्धांसः आगता यदा तैः कथितं यत् स्वधर्मपरायणगृहस्थ एव श्रेष्ठः वर्तते, तदा राजा तस्य कृते प्रमाणं याचितवान्। परं ते यदा प्रमाणं दातुं न शक्तवन्तः तदा राजा तान् सन्यासी भवितु निर्दिष्टवान् । अन्तिमे एकः तरूणसन्यासी आगतः राजा तेनापि तथैव प्रश्नं कृतवान्। सन्यासिना कथितं यत् हे राजन्! स्व–स्व–स्थाने सर्वं श्रेष्ठं वर्तते, कश्चिदपि न्यूनः नास्ति। राजा तस्मात् प्रमाणम् इष्टवान्। सन्यासिना उक्तं यत् आम् अहं एतं सिद्धं करिष्यामि परन्तु भवता या सह आगन्तव्यं भविष्यति तथा कतिचन् दिनानि मया सह जीवनं यापनीयं भविष्यति, तदा एव अहं भवते स्ववार्तायाः प्रमाणं दातुं शक्ष्यामि। राजा सन्यासिनः वार्ता अङ्गीकृतवान्, राज्यभारं मन्त्रिणे दत्वा तेन सह प्रस्थितवान् च । सन्यासिना सह राजा स्व–राज्यस्थसीमां परित्यज्य नैकेषु देशेषु भ्रमणं कुर्वन् एकम् बृहद्‌राज्यं प्राप्तवान्। तस्य राज्यस्य राजधान्यां एकः बृहदुत्सवः प्रचलति स्म्।

राजा सन्यासी च संगीतस्य दुन्दुभ्याः शब्दं श्रुतवन्तौ घोषणाकर्तुः ध्वनिमपि श्रुतवन्तौ। जनाः सुजज्जिता भूत्वा मार्गे स्थिताः आसन्। तस्मिन् समये एका विशेषघोषणा क्रियते स्म। राजा सन्यासी च एतत् सर्वं द्रष्टुं स्थितवन्तौ। घोषणाकर्ता चीत्कारं कुर्वन् अकथयत् यत् अस्य देशस्य राजकुमार्याः स्वयवंरं अस्ति। राजकुमारीणां स्वस्यकृते एवं विधं पतिचयनं भारते एका प्राचीना प्रथा वर्तते। स्वस्य भाविपतिविषये प्रत्येकं राजकुमार्याः पृथक् विचारः भवति स्म। काचित् रूपवन्तं पतिं, काचित् विद्वासं काचित् धनवन्तं काचित् रूपयौवनसम्पन्नादि च इच्छति स्म। समीपस्थः राजकुमारः समीचीनरीत्या सुसज्जितो भूत्वा राजकुमार्याः पुरतः प्रस्तुतं कुर्वन्ति स्म। यदा कदा तेषां राजकुमाराणां चारण–भाटादयः अपि भवन्ति स्म, ये तेषां गुणानां गुग़ानादिकं कुर्वन्ति पुनश्चअयमपि दर्शयन्ति स्म यत् तस्यैव वरणं कुर्यात्।

राजकुमारीं सुसज्जितसिंहासने उपावेश्य विशालतया सभां परितः आनयन्ति स्म। सा तेषां सर्वेषां पुरतः याति स्म, तेषां गुणगानं च शृणोति स्म। यदि कश्चित् कुमारः तस्यें न स्वीकार्य भवति तर्हि स्ववाहकान् अग्रे गन्तुमादिशति। तदनन्तरं तस्य अस्वीकृतकुमारस्य ध्यानं न दीयते स्म। यदि राजकुमारी केनचित् राजकुमारेण प्रसन्नो भवति तर्हि सा तस्य ग्रीवायां वरमालया सुसज्जितं करोति पुनः सः राजकुमारः तस्याः पतिः भवति स्म।

तस्मिन् देशे एतौ राजा–सन्यासिनौ च आगतौ आस्ताम्, तस्मिन् देशे तथैव स्वयंवरं प्रचलति स्म। एषा राजकुमारी विश्वे अद्वितीयसुन्दरी आसीत्, पितरौ एकाकी सन्ततिः भूते सति तस्य भावीपतिः एव तस्याः। पितुः पश्चात् तस्य राज्यस्य उत्तराधिकारी भवति। अस्याः राजकुमार्याः विचारः आसीत् यत् रूपवान् पुरुषेण विवाहं करिष्यामि परन्तु तस्य योग्यव्यक्तिः मिलत्येव न । बहुवारं तस्याः कृते स्वयंवरस्यायोजनं कृतम्, परं तस्यानुकूलं वरं न प्राप्तम्। अद्यतनं स्वयंवरं अतीव भव्यमासीत्, अन्येषां कालानामापेक्षा सम्प्रति अधिकाः जनाः आगताः आसन्। राजकुमारी रत्नयुक्तसिंहासने उपविश्य आगता, तस्याः वाहकाः तां प्रत्येकेषां राजकुमाराणां पुरतः नीतवन्तः, परं सा यंकमपि न अवलोमितवती। सर्वे निराशां यातः तथा च चिन्तयन्ति स्म यत् किं पूर्ववत् अद्यापि स्वयंवरं विफलतां यास्यति इति। तस्मिन्नेव क्षणे तत्र एकः अपरः तरूणसंन्यासी अगतः। सः तावान् सुन्दरः आसीत् यथा सूर्यरेव–स्वयमेव आकाशं त्यक्त्वा पृथ्वीलोके अवतरितः। सः आगत्य सभायाः एकस्मिन् भागे स्थितः, तथा च तत्र यत् किमपि प्रचलति स्म, तदवलोकयन्नासीत्। राजकुमार्याः सिंहासनं तस्य पुरतः आगतः यदा राजकुमारी तं दृष्टवती तदा एव सा स्थिता तथा तस्य ग्रीवायां वरमालां स्थापयितुं सिद्धा अभूत्। तरूणसंन्यासी झटिति मालामवरूद्धवान्, कथितवान् च : एतत् किमस्ति? तां मालां क्षिप्तवान्। संन्यासिना कथितं यत् मया साकं विवाहेन किं प्रयोजनम्?

तस्य देशस्य राजा चिन्तितवान् निर्धनताकारणात् एषः राजकुमार्या विवाहं कर्तुं साहसं न करोति। अत एव तेन कथितं यत् भो! संन्यासीवर्य मम कन्यया सह भवते मम अर्धराज्यमपि प्राप्स्यति, पुनश्च मम मृत्योः पश्चात् पूर्णराज्यम्। एतत् उक्त्वा सः पुनः स्व–कन्यां मालां स्थापयितुम् आदिष्टवान्। संन्यासी पुनः मालां निष्कास्य क्षिप्तवान् उक्तवान् च यत् एतत् सर्वं कः क्लेशः वर्तते? मम विवाहस्य का आवश्यककता? एतत् उक्त्वा सः सभां त्यक्त्वा गतवान्।

अत्र राजकुमारी तस्मिन् सन्यासिनि तावत् आसक्ता अभवत् यत् सा उक्तवती यत् अहं एतेन एव विवाहं करिष्यामि अन्यथा प्राणं त्यनोमि इति। एतत् उक्त्वा राजकुमारी संन्यासिन प्रत्यानियितु तस्य पृष्ठे प्रस्थितवती। अस्मिन्नवसरे प्रथमसंन्यासी

यः राज्ञां अत्र आनीतवान् आसीत्, राजा उक्तवान् राजन्! चलतु आवामपि एतयोः पृष्ठे चलावः। तौ तस्य पृष्ठे पर्याप्तान्तरं स्थापयन् प्रचलन्तौ आस्ताम्। सः युवा सन्यासी यः राजकुमार्या विवाहात् मुक्तिमिच्छति स्म, बहुदूरं यावत् निर्गतः अन्ते एकस्मिन् अरण्ये प्रविष्टवान्। तस्य पृष्ठे राजकुमारी आसीत् तथा तौ द्वौ पृष्ठे एतौ द्वौ आस्तम्। तरूणसन्यासी तेन अरण्येन सम्यक्तया परिचितः आसीत् तत्रत्य सर्वविध क्लिष्टमार्गाणां विषये ज्ञानमासीत्। सः एकै मार्गे प्रविष्टः अदृश्य च अभवत्। राजकुमारी तं पुनः द्रष्टुं न शक्तवती। तां बहुकालं यावत् अन्वेषणानन्तरं सा एकस्य वृक्षस्य अधः उपविष्टवती तथा च रोदनं आरब्धवती, यतोहि ता बहिः निर्गमनस्य मार्गः न ज्ञातमासीत्।

एतावति एतौ राजा–संन्यासिनौ च तस्याः समीपं आगतवन्तौ तथा कथितं यत् मा रुदतु अहं त्वां अस्मात् अरण्यात् निष्कासयिष्यामि, परन्तु अधुना बहु अन्धकारो संजातः येन मार्गान्वेषणं सरला नास्ति। अत्रैव एकः विशालवृक्षः वर्तते। आयान्तु अस्य अधः वयं विश्रामं कुर्मः प्रातः काले अहं त्वां मार्गं दर्शयामि। तस्य वृक्षस्य एकस्यां शाखायां एकः लघुचटकः तस्य पत्नी तथा च तस्य त्रयः पुत्रः निवसन्ति स्म। सः चटकः वृक्षस्य अधः एतान् अपश्यत् पुनः स्व–पत्न्यै, अकथयत्, पश्यतु, अस्माकं एते अत्र अतिथयः सन्ति, शीतकालस्य कालः वर्तते, वयं किं कुर्याम्? अस्माकं सविधे अग्निः तु अस्ति न। एतत् उक्त्वा सः उड्डितः पुनश्च एकं ज्वलितकाष्टं स्वचंचौ गृहीत्वा आनीतवान् अतिथिनां पुरतः पातितवान् । ते तस्मिन् अन्यकाष्ठानि योजायित्वा अग्निं वर्धितवन्तः, परन्तु चटकं तथापि सन्तोषः न अभवत्, सः स्व–स्त्रियं पृष्टवान् यत् अधुना अस्माभिः किं वा करणीयम्? एते बुभक्षिताः सन्ति एतेषां भोजनाय अस्माकं सविधे किमपि नास्ति। वयं गृहस्थो स्मः, अस्माकं धर्मो वर्तते यत् यः कश्चित् अस्माकं गृहं आगच्छेत् तं भाजनीयम्। यत् अस्माकं शक्तौ वर्तते, तदवश्यं कर्तव्यम्, अहं एतान् स्वशरीरं एव दास्यामि । एवमुक्त्वा सः अग्नौ कुर्दितवान् भंस्मीभूतः जातः। अतिथयः तं अग्नौ पतन् दृष्टवन्तः तं रक्षणाय प्रयासमपि कृतवन्तुः परं रक्षितुं न शक्तवन्तः। तस्य चटकस्य स्त्री स्वपत्युः सुकृत्यं अपश्यत् स्वमनसि अचिन्तयत् च एते तु त्रयः सन्ति एकेन चटकेन किं भविष्यति? पत्नीरूपेण मम कर्तव्यं वर्तते यत् मम पतिनः कार्यं व्यर्थं न गच्छेत्। ते ममापि शरीरं स्वीकुर्युः। एवं विचार्य सा अपि अग्नौ पत्युः स्वप्राणं प्रदत्तवती।

अनन्तरं ते त्रयः लघुपुत्राः अपश्यन् यत् तेभ्यः अतिथिभ्यः एतावत् तु पर्याप्तं न भविष्यति ते परस्परं विचारं कृतवन्तः यत् पितरौ यथायोग्यं कृतवन्तौ परन्तु तथापि तावत् पूर्णं नास्ति। अधुना अस्माकं कर्तव्यं वर्तते यत् वयं तयोः कार्यं पूर्णं कुर्मः। अस्माभिरपि स्वशरीरं दातव्यम्। एवं विचार्य ते बालचटकाः अपि अग्नौ कुर्दितवन्तः। एतत् सर्वं दृष्टवा एते त्रयः आश्चर्यम् अनुभूतवन्तः तान् चटकान् ते भोक्तुं कथं

शक्नुवन्ति स्म। रात्रौ ते भोजनं विना शयनं कृतवन्तः। प्रातः काले राजा–संन्यासिनौ च राजकुमारीं अरण्यस्य मार्गं दर्शितवन्तौ, सा गृहं प्रति गतवती । तदा संन्यासी राजानं प्रति उक्तवान्, पश्यतु राजन्! भवता अधुना ज्ञातं यत् सर्वे स्व–स्वक्षेत्रे महान्तः सन्ति। यदि भवान् संसारे स्थातुमिच्छति तर्हि चटकमिव आचरणं कृत्वा भवतु, अपरस्य कृते स्वजीवनं दातुं सर्वदा सिद्धो भवितव्यः। यदि संसारं त्यक्तुमिच्छति तर्हि तस्य संन्यासिनः सदृशं त्यजतु, यस्य कृते सा परमसुन्दरी राज्यं च तृण्वत् वर्तते। यदि गृहस्थः भवितुमिच्छति तर्हि अपरेषां कृते स्वजीवनसमर्पणाय सर्वदा कटिवद्धौ भवितव्यः यदि भवन्तं संन्यासजीवनस्य इच्छा अस्ति तर्हि सौन्दर्य–धन–अधिकारं प्रति नेत्रम् अपि न उत्थापनीयम् । प्रत्येकः स्व–स्वक्षेत्रे महान्तः सन्ति, एकस्य कर्तव्यमपरस्य कर्तव्यं कदापि भवितुं नार्हति इति।

गन्धः सुवर्णे, फलमिक्षुदण्डे
नाकारि पुष्पं खलु चन्दनेषु।
विद्वान् धनाढ्यो न तु दीर्घजीवी
धात्रे पुरा कोऽपि न बुद्धिदोऽभूत्।।

वृक्षप्रवासी न च पक्षिजाति–
स्त्रिनेत्रधारी न च शूलपाणिः।
त्वग्वस्त्रधारी न च सिद्धयोगी
जलं च बिभ्रन्न घटो न मेघः ।।
– नारिकेलफलम्

# रेखीयाभिक्रमिताधिगमः

सत्यदेवः
शोधच्छात्रः

यस्मात् सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः।
यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः।। (भीष्मः 61)

शिक्षणजगति अभिक्रमिताधिगमः शिक्षणाय काचिद् योजनाबद्धम् एवञ्च क्रमबद्धप्रक्रियाक्रमं द्योतयति। अस्याधिगमस्योद्देश्यं लक्ष्यं वा शिक्षोद्देश्यानां प्राप्तिः अधिगमस्था. त्त्वञ्च वर्तते। अभिक्रमिताधिगमप्रक्रियायां पाठ्यवस्तु लघु--लघु खण्डेषु इत्थं प्रस्तूयते, येन छात्रः प्रत्येकमुद्दीपकस्योपरि प्रतिक्रियां नैव करोति तावत् सः अग्रे न सरति। शिक्षणसूत्रैः अस्य निर्माणस्य संकल्पना क्रियते तथा च अनेन साहाय्येन छात्राः ज्ञातादज्ञातं प्रति गच्छन्ति । कक्ष्यायां छात्राध्यापकयोः मध्ये या अन्तः क्रिया भवति, तथा प्रक्रियया शिक्षणोद्देश्यानां प्राप्तिर्भवति। परञ्च छात्राधिक्यात् शिक्षकाः प्रत्येकस्मिन् छात्रे वैयक्तिकावधानं दातुमसमर्थाः भवन्ति। अस्यां परिस्थितौ अधिगमसारल्याय अनेन प्रयोगमाध्यमेन छात्राः स्वयमेव ज्ञानार्जने समर्थाः भवन्ति। तेषु नूतनाविष्कृतशिक्षणविधिषु अभिक्रमिताधिगमोऽयमन्यतमः। वस्तुतः शिक्षणाधिगमप्रक्रियां विकसितुमभिक्रमिताधि-गमोऽयमाविष्कृतः विद्वद्भिः।

ज्ञानस्य लघ्वंशान् एकस्मिन् तार्किकरूपक्रमे व्यवस्थितकरणमेव अभिक्रमः। अस्याभिक्रमस्य संपूर्णा प्रक्रिया अभिक्रमिताधिगमेति नाम्ना अभिधीयते। स्टोफल् उद्भव-डॉ. सिडनीप्रेसीनामाख्येन अमेरिकादेशीयेन अनेन मनोवैज्ञानिकेन 1920 तमे वर्षे छात्राणां समक्षे प्रश्नानामेका शृङ्खला प्रस्तुता। छात्रैः प्रदत्तोत्तराणां साहाय्येन निर्धारितलक्ष्यस्य अनुसरणं भवति स्म। अतः सर्वप्रथमं 1920 तमे वर्षे महोदयेन शिक्षणयन्त्रस्य निर्माणं कृतम्।

तदनन्तरं बी.एफ्.स्कीनर् महोदयेन 1950 तमे वर्षे अधिगमविषयमाश्रित्य नैकाः सफलप्रयासाः कृताः। भारते प्रप्रथमं 1963 तमे वर्षे इलाहाबादस्थसंस्थया अयं प्रविधिः प्रयुक्तः। परञ्च यदि वयमत्र सूक्ष्मेक्षिकया अन्वेषणं कुर्मः, तर्हि ज्ञास्यामः यत् प्रविधिरयं तु प्राचीनकालादेव अस्मिन् भारतवर्षे आसीत्। यथा श्रीमद्भगवद्गीतायां श्रीकृष्णः शोकसंविघ्नमानसमर्जुनं युद्धक्षेत्रे नियोजयितुं क्रमबद्धं ज्ञानं प्रददाति, एवञ्च विष्णुशर्ममहोदयेनापि पञ्चतन्त्रग्रन्थे समुचितं व्यावहारिकं ज्ञानं तार्किकक्रमेण प्रस्तुतम्। इत्थमेव आधुनिकशिक्षाक्षेत्रेऽत्र अभिक्रमिताधिगमं प्रदातुम् अनुदेशनं प्रदातुं वा विद्यमानेषु

**रेखीयाभिक्रम**— शाखीयाभिक्रम—मैथेटिकसभिक्रम—स्वनिर्देशित कम्प्यूटराधारित कार्यक्रम प्रभृतेषु एषु पञ्चसु वर्तते कश्चन अन्यतमोऽयमभिक्रमः।

रेखीयाभिक्रमः— हार्वडविश्वविद्यालये कार्यरतेन प्रो.बी.एफ्.स्कीनर्महोदयेन रेखीयाभिक्रमः निर्मितः प्रतिपादितश्च। अयं तादृशः अभिक्रमः यस्मिन् छात्रः एकस्मिन् रेखीयाभिक्रमे निश्चितपदानामध्ययनपुरस्सरम् अग्रे गच्छति। शृङ्खलाभिक्रमः बाह्यानुदेशनञ्च इत्यनयोः नामभ्यामपि अभिक्रमोऽयं ज्ञायते। अस्मिन् अभिक्रमे सर्वाण्यपि पदानि शृङ्खलाबद्धानि भवन्ति एवञ्च छात्रः प्रत्येकं पदं क्रमेण पठति। अत्र पाठ्यवस्तु लघ्वंशेषु विभज्य सोपानक्रमे प्रयुक्तं भवति। तदनन्तरं छात्राः उत्तरप्रदानाय निर्दिश्यन्ते। छात्रैः प्रदत्तोत्तरप्राप्तेः अनन्तरं तस्य साधूतरं प्रकटय्य तं पुनर्बलनं दीयते तत्पश्चात् प्रथमस्य प्रश्नाधारेण पुनः प्रश्नोत्तरं तथा च पुनर्बलनम् एवञ्च द्वितीयप्रश्नाधारेण प्रश्नोत्तरं पुनर्बलनञ्च प्रदीयते। अनेन क्रमेण छात्राः प्रारम्भिकव्यवहारादन्तिमम् अभीष्टव्यंवहारणपर्यन्तम् समायान्ति।

**रेखीयाभिक्रमप्रवृत्तिः उद्दीपनम्**— पाठ्यवस्तु (प्रश्नाः) यत् छात्रान् प्रतिक्रियां कर्तुं प्रेरयति। उद्दीपनं कस्यापि विशिष्टायाः क्रियायाः कृते परिस्थितिं निर्माति।

अनुक्रिया— सक्रियव्यवहारस्य अंशभूता भवति। उचित—अनुक्रिया अधिगमकर्मणि साहायिका भवति। अन्यथानुचितानुक्रिया अधिगमे बार्धिका भवति।

**पुनर्बलनम्**— अनुक्रियाणां समभावनां संवर्धयति।

रेखीयाभिक्रमविशेषता— (characteristics of liner programming)

1— रेखीयमार्गः— रेखीयाभिक्रमे छात्रः क्रमबद्धरूपेण लघुतरपदैः रेखीयमार्गे गतिमन्तः सन् अन्तिमव्यवहारमाप्नोति।

2— प्रतिपोषणम्— अत्र छात्रानुक्रियायाः परीक्षणं विधाय समुचितानुक्रियायै पृष्ठपोषणव्यवस्था भवति।

3— मार्गसाम्यम्— सर्वे छात्राः समानमार्गमनुसरन्तः लक्ष्यमाप्नुवन्ति ।

4— उद्बोधप्रयोगः— आदौ अधिगमसरलतायै उंदबोधानां संकेतानाञ्च प्रयोगः क्रियते, अनन्तरकाले एते मन्दतया प्रयोगशून्यतामाप्नुवन्ति ।

5— नियन्त्रितानुक्रिया— अनुक्रियायां तस्याः क्रमे च नियन्त्रणं क्रियते।

6— छात्रत्रुटीनां कृते अल्पावसंरः एतस्मिन् अभिक्रमशिक्षणे शिक्षणसामग्र्याः निर्माणं एवम्प्रकारेण क्रियते यत् छात्रविषयस्य प्रस्तुतीकरणञ्च एवम्प्रकारेण क्रियते यत् छात्रत्रुटेः सम्भावना नितान्ततया अवसिता भवति।

7— सिद्धान्ताधारितं मनोविज्ञानम्— शिक्षणमेतत् मनोविज्ञानस्य अधिगम सिद्धान्तेषु आश्रितं भवति।

8– स्वाध्ययनप्रेरणा– अयमभिक्रमः छात्रं स्वाध्यायनिमित्तं प्रेरयति। यस्मात् विविधमानसाः छात्राः स्वाध्ययनगत्यनुसारेण शिक्षणावसरं प्राप्नुवन्ति।

9– विषयावबोधक्षमता– एतत् अभिक्रमणं कठिनसम्प्रत्ययानां सरलीकरणे सुगमतया स्पष्टीकरणे च सक्षमं वर्तते।

10– छात्रसक्रियता– अधिगमवेलायां छात्राः सक्रियाः क्रियाशीलाः उत्सुकाः च विषयं प्रति भवन्ति।

11– पुनर्बलनम्– अधिगमप्रक्रियां प्रभावशालिनीं विधातुं, छात्रस्य प्रत्येकमपि समुचितानुक्रियायाः पुनर्बलनं क्रियते।

12– प्रभावपूर्णविधिः परम्परागतशिक्षणस्य अपेक्षया विधिरयं गुरुतरः वर्तते।

रेखीयाभिक्रमणस्य सीमाङ्कनम् (limitation of linear programming)

1– छात्राणां वैयक्तिकभिन्नतायाः अवज्ञा–अत्र सर्वेषां छात्राणां कृते समानावसराः भवन्ति। वैयक्तिकरूपेण आवश्यकतावधानं न क्रियते।

2– उच्चोद्देश्यप्राप्तौ असमर्थता– अत्र उच्चोद्देश्यप्राप्तिः सम्भवः न अस्ति।

3– तथ्यात्मकपाठ्यसामग्र्याः शिक्षणे अल्पोपयोगिता– एतत् तथ्यात्मकपाठ्यवस्तूनां शिक्षणे अल्पोपयोगी वर्तते। एतत् व्याख्यात्मकपाठ्यवस्तूनां कृते एव उपयुक्ताभिक्रमः वर्तते।

4– छात्राणां बद्धानुक्रिया :– अत्र अधिगमः नियन्त्रितपरिस्थितिषु सम्भवति। अतः छात्राणां कृते अनुक्रियास्वातन्त्रतायै अवकाशः न वर्तते।

5– परिष्कृतशिक्षणसंरचनायां काठिन्यम्– एतस्य परिष्कृतशिक्षणस्य निर्माणे कठिनता वर्तते। बहुधा शिक्षण प्राप्तवतां प्रशिक्षार्थिनां कृते अपि सुष्ठ्वभिक्रमणस्य निर्माणं क्लेशायते।

6– उपयोगितायाः अभावः– रेखीयाभिक्रमसीमावधौ परिष्कृतं शिक्षणं सम्भवं नास्ति।

7– प्रतिभाशालिनां छात्राणां रुच्यल्पता– प्रतिभाशालीछात्राः अभिक्रमणेऽस्मिन् अधिकरुचिवन्तः न भवन्ति।

8– सृजनात्मकतायाः अभावः– विधिरयं छात्राणां सृजनात्मिकतायां पूर्णतया आरोहतां न आनयति।

## "पंजाबी टप्पें"

ओमन दीप शर्मा
अनु.९

नारी मातृरूपां
भगिनी पुत्रि प्रिया
भुवि अद्भुतसम्पदा
विश्वस्तरे युवति यदा
पुरस्कृता भवति
उन्नतं मे भवति शिरः।।
तव मुखं यथा पुष्पं
भ्रमरः मे चेतः
तव पृष्ठे गमनीयम्।।
बाले दूर कथं गच्छति
पुनः पुनः मम विषये
किमर्थं सखायं पृच्छति।।
इच्छति अति मुखरागम्
मेकअप अतीव कृत्वा
मुखं जातं काकसमम्।।
सा गृहादागच्छति
रूपस्य गर्वयुता।
पुनः पुनः मुखं पश्यति।
शृंगारमतीव प्रिया
मुखं न तद् सदृशं
पुवति उद्विग्न मनः।।
वस्त्राणि बहूनि परं
क्रीणाति पुनः पुनः
मनसि न परितोषम्।।

## "पंजाब भूमि"

ओमन दीप शर्मा
अनु.९

यदा कदाऽपि पुनः अहं, आगमिष्यामि भूतले।
कर्मणा हि पंजाब भूमौ आगच्छेत् मम फले।।

यत्र च कृषका स्व रक्तेन सिंचत्ति स्व कृषिभूमिः
बालः वदति हे मात ! अहमपि कृषकः भविष्यामि
कूपनिर्माणं करिष्यामि नास्ति यदि जलं नाले

यदा कदाऽपि पुनः अहं ..............

माता वदति यत् पुत्रः गच्छ त्वं मृत्यु मुखे
योद्धा विजयति मृत्युसमानं भवति दुःख सुखे
सेतुं निर्माणं कुर्यात् नास्ति यदि मार्गः जले

यदा कदाऽपि पुनः अहं ..............

पंजाबस्य हि, भवेत् भूमि तस्यैव कृते जीवनम्
स्वचर्मेण आच्छादितुं तं करिष्ये वस्त्रजीवनम्
पुनः जनिमिच्छामि गुरू भूमौ देशनिर्मले

यदा कदाऽपि पुनः अहं ..............

उद्धंभक्तसिंहयोः नानकगुरूगोविन्दयोः
रणजीतस्य भूमि याश्च जोरावराजीतयोः
स्वर्गे वास्ति मम कृते पंजाबः पृथ्वीतले
यदा कदाऽपि पुनः अहं आभमिष्यामि भूतले
कर्मणाहि पंजाब भूमौ आगच्छेत मम फले।।

यदा कदाऽपि पुनः अहं ..............

# भारते स्त्री शिक्षा

दिनेश चन्द्र सुयाल
शिक्षाशास्त्री, अनुक्रमांक 83

भारतीयपरम्परायां संस्कृतौ च नारीणां स्थानम् अत्यन्तमहत्वपूर्णम् अस्ति भावी समाजस्य निर्माणार्थं नारी शिक्षायाः महती आवश्यकता वर्त्तते।

स्वामी विवेकानन्दमहोदयेन उक्तम् –

"स्त्रीणां सदैव असहायता एवम् अन्यस्योपरि दासवत् निर्भरतायाः शिक्षा प्रदीयते" इति।

गृहस्थाश्रमे स्त्री पुरुषस्य सहाय्यं कृतवती। सा सुखदुःखादिषु पत्या सह चलति। यदि तस्याः पतिः कोऽपि कष्टं–दुःखं च अनभवति चेत् सा अपि दुःखिता भवति तस्य दुःखस्य कष्टस्य निवारणाय सा पत्युः सहाय्यं करोति।

प्राचीनकाले बालिकानाम् साहित्य–नृत्य–सङ्गीत–काव्यरचना–वाद–विवाद–दर्शनेत्यादिविषयाणां शिक्षा प्रदीयते स्म पुरुषाणामिव स्त्रीणां शिक्षाव्यवस्था प्रचलिता आसीत्। परिवार एव स्त्रीणां शिक्षाकेन्द्रं आसीत्। सा नारी अर्धाङ्गरुपिणी प्रियतमा सखी च मन्यते।

वैदिककाले स्त्री अबला, दुर्बाला, निर्गुणा नासन्। सा शूरपत्नी हव्या, दिव्या, सुवीरा इत्यादिभिः पदैः उद्घोष्यते। वैदिकयुगे स्त्रीणां कृते पृथग्रूपेण शिक्षासंस्थायाः समुल्लेखो न प्राप्यते। तदानीं स्त्रियः अध्ययनरताः अध्यापनकर्मण्यपि रता आसन् इति विवरणं यत्र तत्र प्राप्यते। तत्र उपाध्याया इति प्रयोगः कृते तु उपाध्यायी उपाध्याया इति च प्रयोग आसीत्।

यद्यपि वैदिकयुगे यमी, इद्राणी, विश्वचारा, लोपामुद्रा, गार्गी, मैत्रेयी इत्येतासाम् उच्चशिक्षितानां स्त्रीणां सम्मुल्लेखो विवरणं च प्राप्यते। स्मृतिग्रन्थादिषु स्त्रीणां महत्वं प्रतिपादितमस्ति यत् –

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रिया।।

बौद्धकाले स्त्रीणां स्थानं पुरुषापेक्षया निम्नतरः आसीत्।

स्त्रीणां समीपे भिक्षुकाः नैव तिष्ठेयुः। इति आदेशः प्रचलिता आसीत् साधारणस्त्रीणां कृते बौद्धशिक्षा पद्धत्यां किमपि स्थानं नासीत्।

यवनकाले पर्दाप्रथायाः बाल–विवाहप्रथायाश्च प्रचलनं आसीत्। अतः सर्वा स्त्रियः, जात्या शिक्षाकार्येभ्यः वञ्चिता आसन्। तस्मिन् काले स्त्रीशिक्षायाः उपेक्षा अभवत्। तस्मिन् समयेऽपि एलीमसुल्ताना, नूरजहाँ, मुमताज इत्यादयः विदुषी स्त्रीयः आसन्।

जहाँआरा बेगम यवनकाले प्रसिद्ध कवयित्री आसीत्। रानी दुर्गावती, अहिल्याबाई, जीजाबाई प्रभृतयाः हिन्दूस्त्रीयेऽपि यवनकाले शिक्षां प्राप्तवन्तः

ब्रिटिश काले स्त्रीशिक्षायाः आवश्यकतां ज्ञातवन्तः। तस्य तस्य शासनकाले बालिकानां विद्यालयानां स्थापना अभवत्। बालिकां विद्यालयेषु प्रसिद्ध विद्यालयः कलत्तायां बैथ्यून विद्यालयः आसीत्। अस्य विद्यालयस्य स्थापना 1849 ई. तमे खीष्टाब्दे सर्वकारीयनियम सदस्य जे.ई.डी. बैथ्यूनेन कृतवान्।

1854 ई. तमे वर्षे बुड़ घोषणापत्रापुसारेण सर्वकारः स्त्रीणां शिक्षा स्वस्योपरि नीतवान्। पत्रेऽस्मिन् नारी शिक्षायाः महत्वं प्रतिपाद्य घोषणापत्रे बालिकानां शिक्षार्थं तथा च तस्या चारित्रिक, मानसिक, नैतिकंविकासार्थं पृथक्–पृथक् विद्यालयस्य स्थापना संस्तूत्य रूपेण उद्घोषिता।

1882 तमे खीष्टाब्दे हण्टर कमीशन तत्कालीन स्त्रीशिक्षायाः दयनीयावस्थाम् विलोकयन्! द्रबिभूतः सः स्त्री शिक्षायाः प्रसारार्थं जनान् प्रेरितवान्। जनानां सर्वकारस्य च उद्यमेन स्त्रीशिक्षायां प्रगतिः संजाता।

1904 तमे खीब्शब्दे श्रीमती एनी बेसेन्ट 'सेन्ट्रल हिन्दू गर्ल्स स्कूल' स्थापितवती। 1925 तमे खीष्टाब्दे राष्ट्रीयमहिलापरिषद् इत्यस्य स्थापना संजाता। अनेन प्रकारेण ब्रिटिशशासनकाले स्त्रीणाम् शिक्षायाः विकासः अभवत्। स्वतन्त्रभारते नारीणां सामाजिकावस्थायां परिवर्तनं जातम्। पुरुषमिव नारीणां समान अधिकारः अस्ति। भारतीयसंविधानः स्त्रीणां नार्यः समकक्षता प्रदास्यति।

विश्वविद्यालयशिक्षा आयोगेन स्त्रीशिक्षायाः उपरि बलपूर्वकेन कथितम् यत्–शिक्षातस्त्रीयां विना शिक्षितव्यक्तेः उत्थानः नैव भवति। एतादृश प्रकारेण स्त्रीणां शिक्षायाः विकासाय अनेकानि शिक्षासंस्थानानि क्रियाशीलकार्यक्रमाणां स्थानं दत्तवन्तः।

साम्प्रतिकाले स्त्रीशिक्षा स्त्रियः एवैता मातृशक्तेः प्रतीकभूताः। सर्वेषु शिक्षाविद् कार्यक्रमेषु अपि स्त्रियाः स्थानं प्रथमम् भवति। गृहाधिष्ठातृदेवतात्वात् सा गृहिणी, गृहलक्ष्मीः इत्यादिशब्दैः उच्यते। अतः अद्यापि कथ्यते।

"न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति। अतः अधुनपि देशस्य समाजस्य च उन्नत्यै स्त्रीशिक्षायाः आवश्यकं अस्ति।

## बालकस्य व्यक्तित्ववर्धने विद्यालयस्य अध्यापकाभिभावकानाञ्च योगदानम

प्रेम प्रकाशः
शिक्षाचार्य, अनुक्रमांक 15

पाठशालासु विद्यार्थिनां कृते केवलज्ञानप्रदानमेव उद्देश्यं नास्ति, तेषां संतुलितव्यक्तित्वाभिवर्धनमपि लक्ष्यं वर्तते। एतल्लक्ष्यप्राप्तयर्थं कानिचित् सौविध्यान्यपेक्ष्यन्ते। तद्यथा –

दैनिकजीवनाय अपेक्षितानाम् अशनवसनादीनाम् अपेक्षा बालानां मनसि खेदं जनयेत्। अतः तेषां कुपथे प्रवृतिः स्यात्। मातापित्रोः प्रीतिः, गुरूणां वात्सल्यं, अभयं, स्वातन्त्र्यं इत्यादयः अंशाः बालैः नोपलभ्यन्ते चेदपि तेषां मनसि किमपि कष्टं जायते। ततश्च अशोभनव्यक्तित्वं स्यात्। अतः अध्यापकैः प्रीतिमद्भिः भाव्यम्। निश्शुल्कं मध्याह्नकाले भोजनं पुस्तकवस्त्रादीनां वितरणं च कार्यम् छात्राणां शक्त्यनुगुणं लक्ष्यकल्पनमपि शोभनव्यक्तितत्वे कारणं भवति। शक्तिमतिरिच्य लक्ष्यकल्पनेन लक्ष्याप्राप्तौ बालाः विषण्णाः भवन्ति। स्वशक्त्यसाध्ये प्रेरिताः बालाः आशाभङ्गेन कुमार्गे प्रवर्तेरन्। यूनां प्रौढाणां च पराजयेन उन्मादो जायत। आत्महत्यामपि कदाचिदाचरेयुः।

व्यक्तित्वे नष्टे बालाः चौराः दुर्विनीताश्च भवन्ति। बालकीयशक्त्यनुगुणं विद्या दातव्या। उपदेशः, सांत्वनं, सन्मार्गप्रदर्शनं, ईश्वरे विश्वासः, भविष्यति शुभे प्रत्याशा **(Hope)** बालानां मनसि व्यक्तित्वं सम्यक् उद्भावयेयुः। अतः आचार्याः एतद्विषये जागरुकाः भवेयुः।

बालानां समग्रव्यक्तित्वोत्पादनात्पूर्वं किम् आत्मनो व्यक्तित्वं संतुलितं वर्तते इति उपाध्यायः परीक्षां कृत्वा जानीयात्।

यस्य संवेगानुपातः समीचीनः व्यक्तित्वं च संतुलितं भवति सः परिवेशानुगुणं स्वजीवनं वर्तयेत्। कुत्रापि अतृप्तिं नैव प्रदर्शयेत्। आत्मविश्वासी स्यात्। आफलोदयकर्मा भवेत्। इतरे यथा अस्मिन् स्निह्येयुः तथा वर्तेत। आत्मना कृतान् दोषान् स्वयमवगत्य तत्परिहाराय प्रयतेत्।

निम्नसूचितानि अशोभनव्यक्तित्वसूचकानि भवन्ति। तद्यथा –

यस्य व्यक्तित्वं न समीचीनं सः अल्पेऽपि विघ्ने कार्याद्विरमेत्। यत्किमपि व्याजमुद्दिश्य कार्यान् नैव कुर्यात्। कार्ये प्राप्ते व्याध्यादिं निर्दिशेत्। स्वीयमपराधं कारणत्वेन कदापि न निर्दिशेत्। परेषु दोषारोपणं कुर्यात्। आत्मनः दशां दुर्दशां मत्वा सर्वदा विषदी कोपी वा भूत्वा भार्यापुत्रादीन् पीडयेत् आत्मनः दोषगोपनाय आत्मप्रशंसां कुर्यात्। प्रभुत्वेच्छया परपीडारूचिः भवेत्। प्रप्रथमं बालानां व्यक्तित्वं निर्नियन्त्रितं भवति दृष्टाय सर्वस्मै अपिं क्रीडनकाय स्पृहयेयुः। ततः क्रमशः मातापितृभ्यां नियन्त्रिताः लक्ष्यं किमपि उद्दिश्य

प्रवर्तन्ते। पाठशालां गत्वा अध्ययनं कुर्वन्ति। तत्रापि पाठ्येतर कार्याणि, पाठ्यसह्गामिक्रियाः, क्रीड़ा, समाजसेवासक्तिः, मानसोल्लासयात्राः अन्ये च एतादृशाः कार्यक्रमाः बालानां व्यक्तित्ववर्धने उपकुर्युः।

**सन्दर्भग्रन्था :**

1.डॉ. रामशंकल पाण्डेय, संस्कृत विभाग, विनोद पुस्तक मन्दिर, आगरा, 2006।
2.भोलानाथ तिवारी, भाषा विज्ञान।
3.पाठक, पी.डी. शिक्षा मनोविज्ञान, विनोद पुस्तक मन्दिर, आगरा, 2008।
4.द्विवेदी डॉ. कपिलदेव, रचनानुवाद कौमुदी, वि.वि. प्रकाशन, वाराणसी, 2006।
5.सुरेश भटनागर, शिक्षा मनोविज्ञान, सूर्या पब्लिकेशन मेरठ – 2001।

# शोधसाहित्यस्य समीक्षा

प्रमोद कुमार शुक्ल
शिक्षाचार्य अनुक्रमांक, 26

अर्थ :–

साहित्यस्य समीक्षा इत्यस्मिन् द्वौ शब्दौ वर्तते। साहित्यं समीक्षा च। साहित्यशब्दः परम्परागतार्थेन विभिन्नाः अर्थाः प्रकटयन्ति। एषः भाषायाः सन्दर्भे प्रयोगः क्रियते। यथा – हिन्दीसाहित्यम्, आंग्लसाहित्यम् संस्कृतसाहित्यमित्यादयः। अस्यान्तर्गते गद्य–पद्य–नाटक–उपन्यास–कथादिः आयान्ति। अनुसन्धानस्य क्षेत्रे साहित्यशब्दः कस्यचित् विषयस्य अनुसन्धानस्य विशेषक्षेत्रं प्रति सङ्केतयति, यस्यान्तर्गते सैद्धान्तिकं, व्यावहारिकं तथ्यात्मकं च शोधाध्ययनमायान्ति। साहित्यस्य समीक्षा इति शब्दः अधोलिखितरीत्या परिभाषीकृता। शोधसन्दर्भे अस्य विशेषार्थः भवति।

योग्यचिकित्सकैः औषधिक्षेत्रे अभूत नवीनतमान्वेषणैः सह चालनीयम्। स्पष्टतया शिक्षाशास्त्रस्य विद्यार्थी शोधकर्ता च शैक्षिकसूचनानां साधनैः उपयोगैश्च तथा स्थापनेन परिचितो भवेत्।

lkfgR;leh{kk;k%.vko';drk %&

1. शोधकार्यस्य योजनानिर्माणे प्रारम्भिकपदेषु एकं रुच्यानुरूपं विशेषक्षेत्रे कृतानां शोधकार्यानां समीक्षां करोति, अस्य शोधस्य गुणात्मकं मात्रात्मकं च विश्लेषणं शोधकर्तारं एकस्य दिशः सङ्केतं ददाति।

2. प्रत्येकानुसन्धानकाले इदमत्यन्तमावश्यकं वर्तते यत् सः अन्यैः कृतानां स्व–समस्यानां सम्बन्धितसाहित्यस्य सूचनाभिः उत्तमतया अवगतः स्युः। वास्तविकयोजनानिर्माणे अध्ययनकरणे च इदम् अत्यावश्यकं वर्तते।

3. अस्याध्ययनस्य समस्यां साधनं प्रदीयते, शोधस्य समस्यायाः चयनं, ज्ञानाय च समानतां प्राप्नोति। शोधकर्ता साहित्यस्य समीक्षाऽधारे स्वपरिकल्पनाः निर्माति । एषः अध्ययनाय आधारप्रदानं करोति। अध्ययनस्य परिणामेषु निष्कर्षेषु च वाद–विवादश्च क्रियते।

साहित्यस्य समीक्षा व्याख्यायितानां समस्यानां पूर्णस्वरूपं प्रकटयति। तस्य क्षेत्रस्य साहित्यस्य समीक्षया क्षेत्रेषु ज्ञानस्य विकासः कर्तुं शक्यते।

उद्देश्यानि –

1.अयं सिद्धान्तः विचाराः व्याख्याः परिकल्पनाश्च प्रदानं करोति, या नूतनसमस्यायाः चयने उपयोगी भवितुमर्हति।

2.एषः परिकल्पनायै साधनं प्रददाति। शोधकर्ता प्राप्ताध्ययनानामाधारे शोधपरिकल्पनाः निर्मातुं शक्यते।

3.एषः समस्यायाः समाधानाय उचितविधिः–प्रक्रिया– तथ्यं च साधनस्य सांख्यकीयतकनीकश्च परामर्शं ददाति।

4.एषः परिणामस्य विश्लेषणे उपयोगी निष्कर्षान् तुलनात्मकतथ्यान् च निर्धारयति। सम्बन्धिताऽध्ययनैः प्राप्तनिंष्कर्षाणां तुलना कर्तुं शक्यते। तथा च एषः समस्यायाः निष्कर्षेभ्यः उपयोगी भवितुमर्हति।

5.एतत् शोधकार्यं कृतेषु क्षेत्रेषु शोधकर्तुः निपुणतां सामान्यज्ञानं च विकासने सहायको भवति।

çfØ;k%&

1) अनुसन्धानाय पुस्तकालयसामग्र्यः क्रमानुसारं भवेत्। शोधकर्त्रा शैक्षिकसूचीपत्रेण स्वस्य तथ्यान् एकत्रीकृत्वा कार्यारम्भः करणीयः। यदा नैकेषां सन्दर्भानां अनुकरणं करणीयं भवति, तदा तान् छायाप्रतिः करणीयः यतो हि कार्यमिदं नियतपूर्णकरणम् अत्यावश्यकं वर्तते।

2. अनुसन्धानकर्तारं अवश्यकतानुसारं पूर्णलेखाः स्वीकरणीयाः अनावश्यकविषयान् व्यकतव्याः। उपयोगी तथा आवश्यकसामग्री च नियमपूर्वकं सज्जीकरणीयाः। समानसाधनानाम् एकत्रीकरणं शोभनं भविष्यति।

3. पुस्तकालयस्य प्रभावशाली कार्याय शीघ्रतया पठनस्य योग्यता आवश्यकी भवति। इदं कौशलमभ्यासेन विकासयितुं शक्यते। शोधस्य उद्देशाय साहित्यस्य सर्वेक्षणं किमपि सरलं कार्यं नास्ति। एष विशिष्ट उद्देश्याय विशिष्टज्ञानप्राप्तकरणस्य विधिपूर्वकं कृतं कार्यं वर्तते।

4. शोधकर्त्रे लेखस्वीकरणस्य कार्यमत्यन्तं क्लिष्टं वर्तते। तं स्वस्य अधिकांशसमयः पुस्तकालये लेखनिर्माणे एव यापयति। इदमेकं क्षान्तिदायकं कार्यं वर्तते। परन्तु अस्पष्टतायै महत्त्वपूर्णं मार्गदर्शनं करोति। तम् अंस्योद्देश्याय पुस्तकालये प्राप्त सुविधनां लाभः स्वीकरणीयः।

lk/kukfu &

1) पुस्तकानि, पाठ्यपुस्तकानां सामग्री।

2) समये–समये निर्गता पत्रिकाः।

3) सारांशः 4) विश्वकोशः

5) पत्रावली, पुस्तकानि, वार्षिकपुस्तकानि च।

6) अन्ताराष्ट्रियशिक्षायां सन्दर्भितपुस्तकानि। 7) विशिष्टशब्दकोषः

8) लघुशोधः शोधग्रन्थश्च 9) समाचारपत्रम्।

शो.सा.समीक्षायाः कार्यम्



1) विचारणीयशोधाय निर्देशानाम् अवधारणानां च निर्माणम्।

2) समस्याक्षेत्रस्य शोधस्य वस्तुस्थितै अवगमनम्।

3) शोधविधीनां तथ्यानां च विश्लेषणमाधारः प्रदीयते।

4) विचारणीयशोधस्य सफलता–निष्कर्षाणां च उपयोगितायाः महत्त्वस्य च सम्भावनायाः आंकलन–करणम्।

5) शोधस्य परिभाषा–कल्पना–सीमा–परिकल्पनानां च विश्लेषणाय आवश्यकज्ञानप्रदानम्।

शो.सा.समीक्षायाः अभिलेखा %&

सामान्यतया साहित्यस्य समीक्षा शोधस्य लघुशोधस्य वा द्वितीयाध्याये लेखवद्धः क्रियते। साहित्यसमीक्षायाः लेखवद्धकरणस्य उद्देश्यम् शोधसारांशान् एकम्–एकं कृत्वा लेखनं नास्ति। यथा आधुनिकशोधकर्तारः प्रायः कुर्वन्ति। इदं शोधकर्तुः अतिक्लिष्टं सृजनात्मकं च कार्यं वर्तते। एतं लेखवद्धं कुर्वन् समये अधोलिखितप्रक्रियाणामनुसरणम् अनिवार्यम् –

1) विशिष्टक्षेत्रस्य एकत्रित–शोधाध्ययनैः शोधः करणीयः। सः साहित्यसमीक्षायाः सर्वान् स्रोतांसि निष्कासनाय प्रयासः करणीयः। अध्ययनानां वर्गीकरणाय एकस्य निश्चितसिद्धान्तनिर्माणस्य आवश्यकता वर्तते। व्यावहारिकं परम्परागतं वा वर्गीकरणं वर्तते। शैक्षिकंस्तरे (प्राथमिक–माध्यमिक–महाविद्यालयश्च) तथा अध्ययनानां चराणामाधारे।

2. वर्गीकरणस्य नियमं विकासनानन्तरं एतानि अध्ययनानि नियमानुरूपकं व्यवस्थितं क्रियते। प्रत्येकानाम् अध्ययनानां समीक्षां पृथक्तया लेखनम् परस्परसम्मिलितनिष्कर्षान् अग्रिमे अंशे लेखनीयम्। तान् स्वस्य अध्ययनेन सम्बद्धकरणे अस्या प्रक्रियायाः अनुसरणं करणीयम्।

3. साहित्यसमीक्षायाः अन्ते तेन अध्ययनस्य सम्पूर्णज्ञानस्य एकं विग्रहं प्रस्तोतुं संक्षिप्तीकरणस्य प्रसासः करणीयः। तदोपरान्तं स्वस्य अध्ययनानि तेन सम्बद्धः करणीयः। अन्ते तं इदं बोधनीयं यत् तस्य अध्ययनम् एतस्मात् अध्ययनात् निष्कासितो वर्तते।

सन्दर्भग्रन्थसूची

1) शिक्षा अनुसंधान, डॉ. आर.ए.शर्मा, आर लाल बुकडिपो निकठ गवर्नमेण्ट कॉलिज, बेगमब्रिज रोड मेरठ।

2) शैक्षिक अनुसंधान की विधियाँ, सरीन् एण्ड सरीन, विनोद पुस्तक मन्दिर आगरा।

## संस्कृत शिक्षणविधयः

**शुभश्री बेहेरा**
**शिक्षा शास्त्र विभाग**

प्राचीनकाले संस्कृतशिक्षा प्रकृतेः सुरम्यवातावरणमध्ये गुरुकुलेषु आश्रमेषु परिचालितासीत्। अन्तेवासिनः गृरुगृहे निवासमकुर्वन्। तत्र अन्तेवासिनां कृते नियमानां पालमनिर्वार्यमासीत्। वैदिककाले इन्द्र–वरुण–अग्नि–उषा–वायु–मेघादीनाम् उपासना कृते वेदमन्त्राणां उल्लेख आसीत्। राज्ञ योगदानमपि अतीव गुरुत्वमासीत्। अध्ययनस्य मूलविषयः श्रुतेरभ्यास एवासीत्। अन्तेवासिनां कृते तादृशी शिक्षा दीयते स्म, या शिक्षा समाजेन सह सम्बन्धा आसीत्।

संस्कृतशिक्षणे विभिन्नानां विधीनां शिक्षणं विविधैः विधिभिः प्रविधिभिश्च क्रियते। आधुनिककाले शिक्षणमिदं कथं प्रचलति इति प्रश्नस्य समाधानार्थ संस्कृतशिक्षणस्य विधीनां विचारस्य अपेक्षा वर्तते। संस्कृतशिक्षणस्य विधिः त्रिषु भागेषु विभाजितास्ति । यथा–

संस्कृतशिक्षणस्य विधयः

प्राचीनविधिः — नवीनविधिः — नवीनतमविधिः

प्राचीनविधिः–

तद् युगीयस्य शिक्षणविधेः वेदाभ्यासेनैव बोधो अभवत्। वैदिककालिकशिक्षाया अवलोकनेन ज्ञायते यत् केचन शिक्षणविधयः अतीव प्रचलितः आसन्। वैदिककाले ये विधयः आसन्, पाश्चात्यशिक्षापद्धत्यागमनात्परं संस्कृतशिक्षणाय ते विधयः अपि प्रयुज्यन्ते। ते विधयः सर्वे प्राचीनविधीनामन्तर्गतो भवन्त्येव। सप्तदशशताब्दीपर्यन्तं पाठशालासु, आश्रमेषु, गुरुकुलेषु, मठेषु, विद्यापीठेषु च पाठशालाविधिः प्रचलितासीत्। लार्डमैकालेमहोदयस्य शिक्षणपद्धतैः प्रसारणेन अयं विधिः उपेक्षिताभूत् प्राचीनकाले अध्ययनार्थ गुरोः आह्वानस्य व्यवस्था आसीत्। प्रत्यहं शिष्यः नित्यकर्म समाप्य गुरोः समीपं गच्छति स्म। उच्चशिक्षायाः कृते विश्वविद्यालयस्य प्रवेशद्वारे विद्वद्भिः छात्राणां ज्ञानपरीक्षणं क्रियते स्म। वेदमन्त्राणामुच्चारणं छात्रैः मौखिकविधिना क्रियते स्म। तदानीन्तनमसये श्रवण–मनन–निदिध्यासनादीनां प्रक्रियाणामपि उपयोगमासीत्। तथा च कण्ठस्थीकरणस्यापि विशिष्टं स्थानमासीत्।

पुस्तकस्या तु या विद्या परहस्तगतं धनम्।
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम्।।

सूत्राणां मुख्यमुद्देश्यं "धते समुद्रपुरणम्" आसीत्। अनेन नियमानां सूत्ररूपेण कण्ठस्थीकरणं क्रियते स्म। एतेषां सूत्राणां व्याख्याकृते भाष्यविधेः टीकाविधेश्च अनुसरणं क्रियते स्म। भाषायाः प्राणतत्वमस्ति व्याकरणम्। प्राचीनसमये वेदाध्ययनस्य व्याकरणस्य पठनपाठनं विशेषरूपेण भवति स्म। पतञ्जलिना महाभाष्ये लिखितं यत् "रक्षार्थ वेदानाम् अध्येयं व्याकरणम्" तदनन्तरं छात्राणां शङ्का समाधानार्थं गुरुः व्याख्याविधिमनुसरति स्म। तत्र व्याख्याविधिः षड्विधः।



यथा –

पदच्छेदः पदार्थिकः संशयी वाक्ययोजना।
आक्षेपश्च समाधानं व्याख्यानं षड्विधं स्मृतम्।

uohufof/k %&

अनेन सोपानेन सह नवीनविधिशिक्षणं प्रारभ्यते। लार्डमैकाले महोदयस्य शिक्षापद्धत्यानन्तरं संस्कृतशिक्षणस्य कृते अद्यावधि प्रयुज्यमानाः विधयः अर्वाचीनविधयः कथ्यन्ते। ते विधयः निम्नलिखिता सन्ति। मातृभाषया नवीनशब्दानां स्पष्टीकरणं क्रियते। आदर्शवाचनम्, अनुवाचनं, पाठप्रवर्धनमङ्गीकृत्य मौनपाठनं क्रियते। इत्थं कठिनशब्दानामर्थाः विशेषांशानां विवरणं, मूल्याङ्कनप्रश्नाः व्याकरणस्य अनुवादस्य चाभ्यासाः अध्यापकानां कृते सूचनाश्च अन्तर्भवन्ति। अनेन छात्र–शिक्षकयोः दृष्ट्या पाठस्य सफलतायाः परीक्षणं भवति। शिक्षणोद्देश्यानि ता भवन्ति। इमानि अपेक्षितपरिवर्तनानि व्यवहारेषु त्रिषु पक्षेषु भवन्ति। यथा – संज्ञात्मक, भावात्मक, क्रियात्मकभेदात्। मूल्याङ्कनविधौ ज्ञातविषयसामग्र्याः मूल्यनिर्धारणम् उद्देश्यानामाधारेण अस्माभिः क्रियते। प्रशिक्षणमहाविद्यालयेषु प्रशिक्षणार्थिनां कृते प्रशिक्षकाः ईदृशान् प्रयत्नान् कुर्वन्ति यैः शिक्षणं रुचिकरं सरलं च भवेत्। अधुना संस्कृतशिक्षणमपि नवीनतमोपागममाश्रित्य करणीयमिति।

**नवीनतमविधि :–**

अस्मिन् समये विश्वस्य अन्येषु देशेषु जनाः साङ्केतिकभाषाया कार्यं कुर्वन्ति स्म। तदा भारते संस्कृतभाषया ब्रह्मज्ञानस्य प्रचारः कृतासीत्। अस्य प्रयोगस्य क्षेत्रमपि अत्यधिकं विस्तृतमासीत्। प्राचीनकाले संस्कृतं अव्याकृतमासीत्। एकैकशः शब्दाः पठ्यन्ते स्म। यथा – गौः, अश्वः, पुरुषः हस्त्यादयः। किन्तु अनेन विधिना शिक्षणं समयाधिक्येन भवति स्म। एतत् काठिन्यमेव दूरीकर्तुं सामान्यविशेषलक्षणानि वैज्ञानकिविधेः निर्माणं जातम्। सम्प्रति प्रश्नोऽयमुत्पद्यते यत् आधुनिकवैज्ञानिकप्रौद्योगिकीयुगे वयं संस्कृतशिक्षणं रोचम् आकर्षणीयं, सुग्राह्यञ्च कथं कर्तुं शक्नुमः ? अस्याः शङ्कायाः समाधानार्थं संस्कृतशिक्षणस्य विभिन्नविधीनां आधारेण संयुक्तविधेः प्रयोगकरणे अस्माकं सततं प्रयासस्य अपेक्षा वर्तते।

इदानीं छात्राणां छात्राभिभावकानां इयं धारणा अस्ति यत् संस्कृतभाषा कोऽपि सरलेन नैव अधिगम्यते तथा च भाव्यध्यापकानां इयं समस्या ये छात्राः संस्कृतं नाधिगच्छन्ति, ते पठितुं नेच्छन्ति। अस्य समाधानार्थं वयं कतिपयनवीनतमोपागमानां प्रयोगं संस्कृतशिक्षणे कर्तुं शक्नुमः।

तद्यथा – शिक्षणं कलारूपेण विज्ञानरूपेण इति उभयत्र विकासस्य गत्या सह स्वीकृतम्, व्याकरणं विना भाषाशिक्षणम् असम्भवम्। अतः यदा वयं कमपि नूतननिधिं स्वीकुर्मः तदा व्याकरणस्य उपेक्षा नैव कर्तुं शक्नुमः। भाषाशिक्षणदृष्ट्या रचना व्याकरणयोर्मध्ये अभिन्नसम्बन्धोऽस्ति। कार्यरतानां अध्यापकेषु भाव्यध्यापकेषु च रचनायाः व्याकरणस्य च शिक्षणसम्बन्धिनां विभिन्नशिक्षणकौशलानां विकासस्य एकं सरलं, सुग्राह्यं मितव्ययिसाधनमस्ति।

<u>सूक्ष्मशिक्षणम्</u> –

सूक्ष्मशिक्षणे सम्पूर्णशिक्षणप्रक्रिया नैककौशलेषु विभक्ता वर्तते। उदाहरणतया श्यामपट्टकौशलस्य या समस्या छात्राणां समक्षं प्रस्तूयते सा यथासम्भवं जीवनस्य यथार्थता सह सम्बन्धा भवति।

# वैदिकयुगे गुरुशिष्यसम्बन्धः

डॉ. ऋषिराजः
असि. प्रोफेसर (संविदा)
शिक्षाशास्त्रविभागः
Emailet.guru82@gmail.com

न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत्।
न विना गुरुसम्बन्धं ज्ञानस्याधिगमः स्मृतः।।[1]

प्रस्तुतश्लोकोऽयं सर्वतोभावेन शुद्धं यत्–गुरुं विना ज्ञानं न सम्भवमिति ज्ञायते एवञ्च यदि मानवः ज्ञानविज्ञानयुक्तः नास्ति तर्हि सः मोक्षप्राप्तौः असमथाः भवेत्। ज्ञानविज्ञानविषये प्रोक्तममरसिंहेन–

"मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः [2]

अर्थान्मन्त्रब्राह्मणारण्यकोपनिषद्वेदाङ्गेतिहासपुराणादीनां मोक्षसाधनभूतानां शास्त्राणामुपदेशः ज्ञानमित्युच्यते। ज्ञानप्राप्त्यर्थं लोकेषु जनेभ्यः गुरोः आवश्यकता भवेत्। ज्ञानपिपासवः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसरन्ति स्म। सः गुरुः परमकृपयाध्यारोपापवादन्यायेन एतानुपदिशति स्म। श्रयूत यथा – गुरुमेवाभिगच्छेत्–समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्, तस्मै स विद्वानुपसन्नाय प्राह"[3] इति च।

प्राचीन्भारतीयशिक्षायाम् अध्ययनस्यारम्भः अक्षरस्वीकरणम् इति संस्कारस्य माध्यमेन भवति स्म। संस्कारोऽयं शिक्षारम्भः विद्यारम्भः वा इति नाम्ना प्रसिद्धः आसीत्। तस्मिन् समये संस्कारोऽयं बालकस्य पञ्चमे वर्षे प्रारम्भो भवति स्म। तस्यानन्तरमेव उपनयनसंस्कारः प्रारम्भो भवति स्म। उप समीपे माणवकस्य नयनमुपनयनम्। "सावित्रीमन्त्रोपदेशः" उपनयनसंस्कारस्य मुख्यमङ्गं भवति स्म। स ब्राह्मणक्षत्रियवैश्येभ्यः "गायत्री, त्रिष्टुप्, जगती" चेति त्रिषु छन्दःसु वर्तते। गायत्रीमन्त्रैव सावित्रीमन्त्रत्वेनागतः। उपनयनसंस्कारः ब्राह्मणानां कृते गर्भाऽऽधानात् अष्टमे वर्षे, क्षत्रियाणां कृते एकादशे वर्षे, वैश्यानाञ्च कृते तु द्वादशे वर्षे [4] सम्पन्नो जायते स्म। उपनयनसंस्कारानन्तरं ब्रह्मचर्यव्रतपालनेन वाक्कायमनसां शुद्धिर्जायते। तदनन्तरमेव वास्तविकरूपेण विद्यायाः अध्ययनारम्भः भवति स्म।

---

1– महाभारत, शन्तिपर्वः, 22

2– अमरकोषः

3– मुण्डकोपनिषद्, 12–13

4– गर्भादष्टमेऽब्दे कुर्वीत ब्राह्मास्योपनयनम्
गर्भादेकादशे राज्ञः गर्भान्तु द्वादशे भवेत्।। मनुस्मृतिः 2.38

वैदिकयुगे आचार्यशिष्ययोर्धनिष्ठं सम्बन्धं निरूपयति। शिष्यस्य शिक्षकेण सम्बन्धस्तादृश एव भवति यादृशो गर्भस्थस्य शिशोर्मात्रा सह सम्पद्यते। यज्ञोपवीतधारणम् उपनयनसंस्कारानन्तरम् आचार्यः शिष्यं स्वसमीपम् आनयति। आचार्यः शिष्यं त्रिरात्रं स्वगृहे स्थापयति। रात्रिरज्ञानस्योपलक्षणं भवति, शिष्यस्त्रिविधेनाज्ञानेनावृत्तस्तिष्ठति। शिक्षकात् प्राथमिकशिक्षां संप्राप्य शिष्यः प्रथमां रात्रिं प्राथमिकं ज्ञानं वा पारयति। माध्यमिकशिक्षां समाप्यासौ द्वितीयां रात्रिं द्वितीयमज्ञानं वा पारयति। उच्चशिक्षां गृहीत्वा स तृतीयां रात्रिं तृतीयमज्ञानं वा समाप्नोति। तत्र ज्ञानकर्मोपासनाविषयकं ज्ञानमपि एकैकया रात्र्या सूचितं भवति। आचार्यगृहे त्रिरात्रं निवासं कृत्वा शिष्यः एकैकमज्ञानं परिसमाप्य एकैकां रात्रिं यापयति। तस्यैकं जन्म मातुर्गर्भाज्जायते, द्वितीयं जन्म चाचार्यगृहे निष्पद्यते।

वैदिकयुगे गुरुशिष्ययोर्मध्ये कश्चिदप्रत्यक्षोऽनुबन्धो भवति। शिष्यः यावत्कालं गुरुकुले निवसति तावत्पर्यन्तं गुरुकुलस्यानुशासनं सेवाभावश्चावश्यकमासीत्। गुरुन् शिष्यानामाध्यात्मिकपिता कथ्यते स्म। गुरुः शिष्येन सह सदैव पुत्रवत् व्यवहारं करोति स्म। संस्कृतसाहित्ये गुरोः कृते त्रिदेवस्य संज्ञा प्रदत्ता अस्ति यथा :–

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।
गुरुर्साक्षात् परब्रह्म तस्मै श्रीगुरुवे नमः।।

एवमेव निरुक्तकारोऽपि गुरुं पितरौ इव स्वीकरोति। तेन कथ्यते :–

तं मन्येत् पितरं मातरं च तस्मै न द्रह्मत्कतमच्चनाह [5]

संस्कृतवाङ्मये गुरोः कृते आचार्यः, उपाध्यायः, शिक्षकः इत्यादयः शब्दाः प्रयुक्ताः सन्ति। आचार्यस्तु अनुशासनप्रियत्वात् न्यायप्रियत्वात् च यमतुल्यं, पक्षपातरहितवात् वरुणः छात्राणां कृते आह्लादकत्त्वात् सोमः, अज्ञानव्याधेः निवारकत्त्वात् औषधतुल्योऽपि कथ्यते [6] स्म। यः (शिष्यः) गुरुसन्निधौ न पठति स्म, केवलं पुस्तकादेव पठति स्म तस्य आदरो नाऽऽसीत् कदापि।

पुस्तके प्रत्ययाधीतं नाधीतं गुरुसन्निधौ।
भ्राजते न सभामध्ये जारगर्भा इव स्त्रियः।।

अतः गुरो सान्निध्ये यदा छात्रः शरीरमनोबुद्धीन्द्रियाणि योजयित्वा एकाग्रमनसा बद्धकरः तिष्ठति तदाजायते उत्तमाधिगमः। भगवता मनुनोक्तम् :–

---

5– यास्क विरचित् निरुक्तं–2/41

6– आचार्यो मृत्युर्वरुणः, सोमः औषधयः पथः 1 अथर्ववेदः, 11.5.14

"शरीरं चैव वचं च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेत् वीक्ष्यमाणो गुरोर्मुखम्।। [7]

एवञ्च ब्रह्मज्ञानेऽपि गरुरेवाऽऽश्रय [8] आसीत् तस्मिन्नेव काले। उपाध्यायः [9] इत्याख्यः शिक्षकः वृत्यर्थं शिक्षणं करोति स्म। स कस्यापि वेदस्य एकं भागमथवा वेदाङ्गम् अध्यापयति स्म। तस्य शिक्षणम् एकाङ्गी एव भवति स्म।[10] शिक्षकः अपि गुरो सदृशम् अतीव प्रमुखमासीत्। भारतीय समाजे शिक्षकस्य स्थानम् अत्युन्नतम् अस्ति, संस्कृतग्रन्थानाम् अनुशीलनेन ज्ञायते यत् शिक्षकः छात्राय पितृवत् पूजनीयः भवति, यत् स्वज्ञानेन छात्रस्य जीवनं प्रकाशयति। अस्मिन् सन्दर्भे प्रश्नोपनिषदः वचनमिदम् ते तमर्चयन्स्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति। [11] संस्कृतवाङ्मये यथा शिक्षकाणां वर्णनं मिलति तथैव छात्राणां वर्णनमपि। प्राचीनकालेऽपि शिक्षकाः कामयन्ति स्म यत् मदीयाः शिष्याः ज्ञानार्जनं विधाय मम कीर्तिं वर्द्धयेयुः। शिक्षकः योग्यान् शिष्यान् चेतुं सर्वदा प्रयतते स्म। शिक्षकः बालकस्य बुद्धेः प्रतिभायाः कुलस्य चरित्रस्य च परीक्षां स्वीकृत्य एव शिक्षयति स्म।

पुराकाले छात्रजीवनस्य शिक्षाप्राप्त्यनन्तरं यदा छात्रः गुरुगृहात् स्वगृहं प्रत्यागच्छति स्म तदा समावर्तनसंस्कारोऽयं भवति स्म। समावर्तनशब्दस्यार्थः भवति यत् "गृहं प्रत्यावर्तनम्" (Returning Home) वस्तुतोऽयं संस्कारः पंचविंशतिवयसि भवति स्म। समावर्तनसंस्कारानन्तरं छात्रः ब्रह्मचर्याश्रमस्य परित्यागं कृत्वा गृहस्थाश्रमे प्रवेशं करोति स्म। वैदिकयुगे यस्मिन् दिवसे संस्कारोऽयं भवति स्म, तस्मिन् दिवसे अपराह्ने छात्रः स्नानं कृत्वा नूतनानि वस्त्राणि धारयित्वा गुरोः समक्षे उपस्थितः भवति स्म। गुरुरपि छात्रान् गृहस्थाश्रमेन सम्बद्धसामाजिकताया विकासाय समावर्तनोपदेशं ददाति स्म तद्यथा :– "हे शिष्य ! सत्यं वद, धर्मं चर, स्वाध्यान्मा प्रमदितव्यम्, स्वकर्त्तव्यस्य पालनं कुरु, यानि समीचीनानि कार्याणि अस्माभिः कृतानि त्वं तेषामनुकरणं कुरु। श्रद्धया दानं दद्यात्। तव कृते अस्माकम् अयमेवादेशः अयमेवोपदेशः इति"।[12]

इत्थं प्रकारेणैव संस्कृतसाहित्यं पुराकालादेव यत्र गुरोः सम्यक् मार्गः द्रष्टु रुपेण व्याख्यां करोति तत्रैव गुरुः परब्रह्मः अपितु विद्यार्थिनां कृते श्रेष्ठोपदेशकः अप्यस्ति यथा –

---

7– मनुस्मृत्ति, 2 / 1921
8– "तद्विज्ञानाय गुरूमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" मुण्डकोपनिषद 1.2.3
9– "एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापपति वृत्त्यर्थमुपाध्यायः स उच्यते ।। मनुस्मृत्ति, 2 / 241
10– "एकदेशमुपाध्यायः" याज्ञवल्क्यस्मृत्तिः 2,35
11– प्रश्नोपनिषद् 6 / 81
12– तैत्तिरीयोपनिषद् 11 / 1

गुरुरेव परब्रह्म, गुरुरेव परागतिः।
गुरुरेव परा विद्या, गुरुरेव परायणम् ।। [13]

अतः अनेन पर्यालोचनेन वयं वक्तुं शक्नुमः यत् वैदिकी शिक्षाव्यवस्थायां गुरुशिष्योर्सम्बन्धः अतीवोत्कृष्टतरः आसीत् यदद्य दृष्टिगोचरः न भवति। अद्यतनीयेषु गुरुशिष्येषु तादृशी भावना नास्ति। गुरुजनैः अद्यतनीयाः छात्राः उपेक्ष्यन्ते। तेषां छात्राणां भविष्यजीवनं गुरुजनाः न चिन्तयन्ति अद्युना। यद्यपि तादृशाः शिक्षकाः अपि समाजे सन्ति ये स्वशिष्यं पुत्रवत् स्निह्यन्ति तथापि ते तु न्यूना एव। आधुनिकशिक्षाव्यवस्थायां शिक्षकछात्रेषु भावात्मकः सम्बन्धः स्यात्। ते केवलं मानवयन्तस्य निर्माणं न कुर्युः कक्षाकक्षेषु अपितु सुन्नागरिकाणां निर्माणे सहायकाः भवेयुः। यस्मिन् शिक्षा व्यवस्था, गुरुशिष्यपरम्परा च वैदिकशिक्षायां वर्णितानां तथ्यानामनुसारं भविष्यति तदैव वयं सत्यरूपेण मानवाः भवितुं शक्नुमः नो चेत् मानव यन्त्रं (मशीन) इत्येव।

---

13— अद्वैताश्कोपनिषद्, 7

सन्दर्भग्रन्थसूची


1) वैदिक साहित्य की रुपरेखा, हंसराज अग्रवाल,चौखम्बा विद्या भवन, वाराणसी, 1965
2) वैदिक साहित्य और संस्कृति, आचार्य बलदेव उपाध्याय, शारदा संस्थान, वाराणसी, 1980
3) वैदिक शिक्षा मीमांसा डॉ. भास्कर मिश्र, ईस्टर्न बुक लिंकर्स, दिल्ली, 1991
4) भारतीय शिक्षा दर्शन सरयू प्रसाद चौबे दि मैकमिलन क. ऑफ इण्डिया दिल्ली, 1975
5) मनुस्मृति पं रामेश्वर भट्ट, चौखम्बा संस्कृत प्रतिष्ठान, 1985
6) मुण्डकोपनिषद्, याज्ञवल्क्यस्मृतिः, राष्ट्रिय संस्कृत संस्थान, नई दिल्ली, – 2002
7) शिक्षा एवं संस्कृति, डॉ. भास्कर मिश्र, भावना प्रकाशन, नई दिल्ली, 1995
8) शिक्षा–दर्शन, डॉ. भास्कर मिश्र, नाग पब्लिशर्स, नई दिल्ली – 2008

# ज्योतिषशास्त्रस्य परिचयः

मुकेशशर्मा
शोधच्छात्रः शिक्षाविभागः

भारतीयसंस्कृतेः साधनायाश्च मूलः वेदः वर्तते। भारतीयवाङ्मये सर्वाधिकप्राचीन एवं प्राणाणिकसाहित्यम् वेदः। वेदेषु सृष्ट्यारम्भतः कालविभाजनपर्यन्तं पृथ्वीतः प्राप्यते। वेदानां सम्यक् परिज्ञानाय षडङ्गेषु विभाजितः'। शिक्षा–कल्प–व्याकरण–निरुक्त–छन्द–ज्योतिषमिति षट् संख्यकानि । तानि हि वेदानां सम्यगवबोधनार्थं प्रवृत्तानि। वेदाङ्गानां ज्ञानं विना वेदार्थः प्रतिपत्तुं नैव शक्यते। पाणिनीयशिक्षायामुक्तञ्च–

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते[1]।।

वेदाङ्गेषु ज्योतिषशास्त्रम् एकं प्रमुखम् अङ्गं मन्यन्ते। वैदिकदर्शनस्य अवध ारणायामाधारितः ज्योतिश्शास्त्रः वेदाङ्गस्य नेत्ररूपे प्रतिष्ठितः। अस्मिन् सन्दर्भे ज्योतिश्शास्त्रमूध र्न्यः विद्वांसः भास्कराचार्यः उच्यते–

वेदश्चक्षुः किलेदं ज्योतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते।
संयुतोपीतरैः कर्णनासादिभिः चक्षुषाङ्गेन हीनो न किञ्चित्करः[2]।।

अनेकभेदैर्युक्तः ज्योतिश्शास्त्रमेको गम्भीरार्णवोऽस्ति। ब्रह्माण्डस्य अनेकतत्वानां सौरमण्डलानां ग्रहनक्षत्राणां च सम्यगध्ययनं ज्योतिश्शास्त्रे एव भवति। तत्र ग्रहनक्षत्राणां विषये तेषां गतिविधिप्रभृतिषु प्रभाविविषयेषु च यत्किमपि वर्णयते तत्सर्वं ज्योतिषमेव। वस्तुतः ज्योतिषां ग्रहनक्षत्राणां कालस्य च बोधकं शास्त्रं ज्योतिश्शस्त्रमिति ज्योतिषस्य परिभाषा[3]।"

अत्र बोधकशब्दे अर्थगाम्भीर्यम्। तेन शब्दस्यास्य अनेके अर्थाः भवन्ति। इत्थं ग्रहनक्षत्राणां विषये तेषां गतिविधिप्रभृतिषु तेषां प्रभावविषये च यद् किमपि वर्ण्यते तत्सर्वं ज्योतिश्शास्त्रमस्ति। इत्थं सिद्धयति यत् ग्रहनक्षत्राणां विषये वा तेषां गतिविधीनां विषये वा तेषां जनजीवने ब्रह्माण्डजीवने च प्रभावस्य विषये वा सर्वज्ञानं ज्योतिषामिति।

ज्योतिश्शास्त्रस्य त्रयः स्कन्धाः सन्ति सिद्धान्तसंहिताहोराश्च। तत्र सिद्धान्तस्कन्धे मुख्यरूपेण ग्रहगणितस्य, संहितास्कन्धे अनेक भूगोलीयविषयाणां, होरास्कन्धे च फलितस्य वर्णनं विवेचनं च मिलति।

## 1– सिद्धान्तस्कन्धः–

अन्ते सिद्धाः सिद्धान्तः इति व्युत्पत्या सिद्धान्तः शब्दः निष्पद्यते। त्रुट्यादितः प्रलयकालपर्यन्तस्य कालगणना यस्मिन् ग्रन्थे स्यात्, कालस्य विविधानां नवमानानां भेदोपभेदानां वर्णनं स्यात्, ग्रहगतेः अष्टभेदानां वर्णनं भवेत्, विविधस्य गणितस्य च अङ्क–बीजगणितरूपेण

विवेचनं स्यात्, दिग्देशकालानां त्रयाणां प्रश्नानां सोत्तरं निरूपणं स्यात्, भूगोलस्य, खगोलस्य, ग्रहगोलस्य च प्रतिपादनं भवेत्, यन्त्राणां निर्माणस्य वेधविधेश्च वर्णनं स्यात्। एतादृशाः ग्रन्थाः ज्योतिश्शास्त्रे सिद्धान्तः इत्युच्यते। यथोक्तञ्च भास्कराचार्येण ।

त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमात्
चारश्चद्युसदां द्विधा च गणितं प्रश्नास्तथासोत्तर।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्ध प्रबन्धे बुधैः।[4]।

सिद्धान्तशास्त्रस्य आचार्याणामिदमपि मतं वर्तते यत् सिद्धान्तस्कन्धग्रन्थानां गणनाविधिभेदात् त्रयः विभागाः सन्ति। तत्र यस्मिन्ग्रन्थे कल्पादितः अहर्गणं निर्माय ग्रहस्पष्टीकरणं विधीयते सः ग्रन्थः सिद्धान्तग्रन्थोऽस्ति । यथा–सिद्धान्तशिरोमणिः, सूर्यसिद्धान्तः, सिद्धान्ततत्वविवेकश्च । यस्मिन्ग्रन्थे युगादितः अहर्गणं विधाय ग्रहस्पष्टीकरणं भवति सः तन्त्रसंज्ञकः ग्रन्थः, यथा–प्रथमार्यभट्टकृत तन्त्रग्रन्थः। यस्मिन्ग्रन्थे च इष्टशकादितः अहर्गणानयनं कृत्वा ग्रहस्पष्टीकरणं क्रियते स भवति करणग्रन्थः, यथा–ग्रहलाघवम्।

इत्थं सिद्धान्तकस्कन्धे त्रिविधानां ग्रहगणितग्रन्थानां वर्णनं मिलति। वस्तुतः सम्पूर्णेऽस्मिन् स्कन्धे अंकगणित–बीजगणित–रेखागणित–त्रिकोणमिति–चापीयत्रिकोणमिति–ज्यामिति–चलन–कलनादीनां सर्वेषां गणितीयषियाणां वर्णनं विवेचनं च मिलति।

**2– संहितास्कन्धः–**

"कात्स्न्र्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता" इति वराहमिहिरवचनेन यत्र जीवनोपयोगीनां विविधप्रश्नानां विचारः क्रियते सा संहिता इत्युच्यते। सामान्यतया संहिताग्रन्थेषु ग्रहचारस्य सप्तर्षिचारस्य, अगस्त्यचारस्य, वास्तुविद्यायाः, शकुन–सामुद्रिक–वायुविज्ञान–वृष्टिविज्ञानानां उपयोगीपशुनां लक्षणानि शय्यासनादीनां लक्षणानि च वर्णनं विवेचनञ्च लभ्यते। अत्रैव स्वप्न–पल्लीपतन–अंकस्फुरणवशाद् शुभाशुभफल–अद्भुतोत्पातलक्षण–ग्रहशान्ति–वस्तुसमर्घमहर्घ इत्यादीनां विचारमपि उपलभ्यते स्वर–केरलादि शास्त्रमपि एतदन्तर्गतैव । वस्तुतः संहितास्कन्धे सिद्धान्त–जातक ग्रन्थान् विहाय अन्येषां सर्वेषां विषयाणां शास्त्राणाञ्च समावेशोऽस्ति। इत्थं संहिताग्रन्थाः ज्योतिषशास्त्रस्य ज्ञानकोशोऽस्ति। सम्प्रति अस्य स्कन्धस्य मानवसमाजे–दैवज्ञसमाजे च चर्चा न्यून ता सञ्जाता। तथापि स्कन्धोऽयमतिमहत्वपूर्णः।

3– होरास्कन्धः–

अहोरात्रशब्दस्य आद्यवर्णस्य अकारस्य अन्तिमवर्णस्य त्रकारस्य लोपात् होरा शब्दः निष्पद्यते । अयं हि होराशब्दः कालस्य बोधकोऽस्ति। अस्मिन्नहोरात्रे लग्नद्वादशं भवति। सम्पूर्णः शुभाशुभाफलानि लग्नाधीनं भवति तथा च लग्नं ग्रहाधीनम्। यथाह कल्याणवर्मा–

आद्यन्तवर्णलोपाद् होराशास्त्रं भवत्यहोरात्रात्।
तत्प्रतिबद्धश्चायं ग्रहभगणश्चिन्तयते यस्मात्।[5]।

होरास्कन्धे जन्मकुण्डली फलविचारात्मकं जातकम्, संस्कारादिमुहूर्त्ताग्रन्थाः प्रश्नशास्त्राः ताजिकग्रन्थाश्च सम्मिलिताः। मुख्यतया होराशास्त्रे वैयक्तिकफलादेशत्वात् तथा च जन्मकुण्डलीतः फलविचारत्वात् स्कन्धोऽयं जातकस्कन्धेन अपि प्रसिद्धः । वस्तुतः ज्योतिश्शास्त्रस्य फलं तु भूतभविष्यद्वर्तमानकालस्य शुभाशुभनिरूपणमादेशः यथोक्तं भास्करेण–**ज्योतिश्शास्त्रं फलं पुराणगणकैरादेश इत्युच्यते**। फलितं तु अनुमानबलेन एव वक्तुं शक्यते। अस्मात् कारणात् फलितं सम्भावनात्मकं कथितम्। तत्रापि भागद्वयं वर्तते। सामूहिकफलं वैयक्तिकफलं च । तत्र यत् समष्टिरूपफलं (सामूहिकफलं) तत् तु संहिता । यत् वैयक्तिकफलं तत् तु होरा अस्ति।

वैयक्तिकफलं अर्थात् प्रत्येकमानवस्य स्व–स्व जन्मलग्न (होरा) वशात् भिन्न–भिन्न फलं भवति । अतः सम्पूर्णजीवनस्य फलकथनं जन्मकुण्डलीतः कुर्वन्ति पण्डिताः। तात्कालिकं वा वार्षिकफलज्ञानाय वर्षपत्रसाधकताजिकग्रन्थाः भवन्ति। शुभा समये यात्राविवाहादिसंस्काराणां निर्णयार्थं मुहूर्तग्रन्थाः भवन्ति। प्रश्नशास्त्रेः लाभालाभ–जयपराजय–प्रवासचिन्ता इत्यादि विषयाः भवन्ति। यैः तात्कालिकग्रहस्थितिः अथवा प्रश्नलग्नवशात् निर्णीताः भवन्ति। साम्प्रतं होरास्कन्धे अनेन नवीनविषयाणामपि सम्मेलनं दृश्यते।

अस्य लोकोपयोगिता–

अस्माकं भारते श्रौतस्मार्तकर्मणां–अनुष्ठाने–षोडशसंस्काराणां सम्पादने–व्रतपर्वोत्सवानां विधाने च शास्त्रमिदमस्माकं महत्सहाय्यं करोति। सत्यमेव नारदेनोक्तम्–

विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्धयति।

यतो हि यदि ज्योतिश्शास्त्रं न स्यात् तदा अमावस्यायां अमावस्यां यजेत् – "पौर्णमास्यायां पौर्णमास्यां यजेत्" इति श्रुतिवचनेन प्रतिपादितस्य दर्शपूर्णमासयज्ञस्य सम्पादनं न भवेत्। ज्योतिश्शास्त्रस्य साहाय्यं विना कदा रामनवमी–कदा जन्माष्टमी–कदा रक्षाबन्धनं–विजयदशमी–दीपावली होलिकामहोत्सवो वा इति सर्वं न निर्णेतुं शक्यते। वस्तुतः दिग्देशकालानां ज्ञानं, जीवने घटितपूर्वानुमानं च अनेन शास्त्रेण भवति। तेन अस्य शास्त्रस्य लोकोपयोगिता स्वयं सिद्धयति।

संसारेऽस्मिन् सर्वे जनाः सुखमेव अभिलषन्ति। सर्वविधसुखाय शुभमुहूर्त्तस्य आवश्यकता भवति। निजजीवनयात्रायां मनुष्यः धर्मकार्ये अर्थकामविषये च, गृहनिर्माणे, विवाहे, यात्रायां, युद्धे यस्मिन्कस्मिन्नपि विषये सफलतां वाञ्छति किन्तु शुभाशुभक्षणविचारं विना तस्य कार्ये सफलता सन्दिग्धः भवति। यदि मनुष्यः जीवनस्याग्रिमसमयस्य तस्यानुसारेण कार्यं करोति अशुभफलं क्षीणं कृत्वा सफलतां प्राप्तुं शक्नोति।

---

1–पाणिनीयशिक्षा, श्लोक सं.41,42

2–सिद्धान्तशिरोमणि, गणिताध्याय, श्लोकं सं.11

3–भारतीय ज्योतिष, नेमिचन्द्रशास्त्री, पृ.सं.17

4–बृहत्संहिता (भट्टोत्पलविवृति संहिता) प्रथमभाग– डॉ. कृष्णचन्द्रद्विवेदी, पृष्ठ भूमिका, पृ.सं. 7



5–सारावली, होराशब्दनिरूपणाध्यायः श्लोक सं. 2

## प्राचीनाधुनिकयोः विचारव्यवस्थयोः तुलनात्मकसमीक्षणम्

सौभिकसाँतरा
शिक्षाशास्त्री

शुभाशुभमागाभ्यां वहन्ती वासनासरित्।
पौरुषेण प्रयन्तेन योजनीया शुभेपथि।
अशुभेषु समाविष्टं शुभेष्ववतारयेत्।

इति वाणी स्मार्ताचार्याणां लेखन्यग्रभागेन भृशं स्मृतिग्रन्थादिषु प्रतिफलिता। पुरा मानवानां शास्त्रमेवासीद्भूषणम्। शास्त्राणि तु प्राचीनभारतीयसमाजस्य दर्पणस्वरुपाणि राजतान्त्रिक आसीत्तदानीन्तनः समाजः। समाजस्य सर्वे मनुष्याः न धर्ममार्गानुसारिणः। क्वचित् स्मृतिमार्गभ्रष्टानां दुर्जनानामपि परिचयः प्राप्यते। ते दुर्जनाः दुर्बलान् पीड़यन्ति स्म, अतः दुर्बलाः तेभ्यः परित्राणलाभाय रक्षकत्वेन राजानमेव पूजयामासुः, राजा तु सज्जनानां परित्राणाय दण्डं प्रददाति स्म, समाजे दण्डाभावे सबलाः दुर्वलान् पीड़यन्ति, तदुकं महाभारते –

दण्डश्चेन्न भवेल्लोके विनरयेयुरिमाः प्रजाः।
बलीयानबलं हि ग्रसते दण्डधराभावे।। 1।।

परन्तु राजा न हि विना विचारं दोषिणं दण्डयेत्, दोषिणः दोषम्, अभियोगकरिणश्च अभियोगस्य सत्यतादिकं सम्यक् विचार्य एव दण्डः प्रदातव्यः, न चेत् राजापि दोषी भवेत्। एतादृशकार्यपरिचालनाय राज्ञः पृथग् एका व्यवस्था आसीत्, सा हि विचारव्यवस्था, यस्या गुरुत्वमिदानीन्तनकालेऽपि अधिकं वर्तते, पुरातनविचारकव्यवस्थायाः ये नियमाः ते क्वचित् इदानीमपि प्रचलन्ति, क्वचिच्च कालानुरोधेने कथञ्चित् परिवर्तितः।

कालेऽद्यतने राजपरिचालितशासनव्यवस्था अवलुप्ता, विधेः (Law) विधानं सर्वान् प्रति सम्यग्रुपेण प्रयोज्यम्। सर्वोपरि आधुनिकविधयः युक्तिनिर्भराः। प्राचीनकालस्य आवेगप्रवणता विश्वासनिर्भरता च अद्यतनकालस्य विधौ वर्जिता, अतः सम्प्रति समाजव्यवस्थायां तदानीन्तनकालस्य बहूनि विधानानि न ग्रहणीयानि। तथापि विविध क्षेत्रेषु भारतीयदण्डविधेः उत्सरुपेण मनुयाज्ञवल्क्यादिस्मृत्युक्तं विधानमेव मानदण्डरुपेण परिगण्यते।

वर्तमानभारतवर्षः गणतान्त्रिकः, संविधानप्रदर्शितनियमानुसारेण परिचाल्यते, विधि प्रणयनं नीतिप्रयोगश्चेति व्यवस्थाद्वयं पुराकालतः अद्यापि प्रचलति, केवलं दण्डधरस्य राज्ञः स्थले अधिष्ठिता लोकसभा। लोकसभायाः निर्माणप्रणाली नियमविधिः परिचालनपद्धतिश्च अस्य देशस्य जनस्वार्थपरिपन्थिनः ब्रिटेन आमेरिका जर्मनि फ्रान्स इत्यादिषु देशेषु संविध

ानस्य ये ये उत्कृष्टांशाः सन्ति तेषामेकत्रीकरणेन भारतीयशासनपद्धतिः सुसज्जिता।

वर्तमाने विचारलयस्य विचारकार्यं शाखाद्वये विभक्त देऐयानी (Civil) फौजदारी (Criminal) चेति, भारतीयविचारव्यवस्थायाः Civil, Criminal चेति शाखाद्वयस्य उत्संस्थानं हि प्राचीनभारतीयधर्मशास्त्रम्, आचार्यबृहस्पतिकात्यायनगौतमप्रभृतयः धर्मशास्त्रकाराः व्यवहारस्य (Judicial Procedure) द्विविधत्वं स्वीकृतवन्तः अर्थशास्त्रकारेण कौटिल्येन तदीये अर्थशास्त्रे धर्मस्थीयः कन्दकशोधनं च इति द्वयोः पद्धत्योः उल्लेखः कृतः।

भारतीयविचारालयस्य कार्यप्रणालीविषयकविधेः संशोधनार्थम् 1908 ईसवीयाब्दे एकविंशतितमे दिवसे देऐयानीकार्यविधिः प्रणीतः। अयं कार्यविधिः 1909 ईसवीयाब्दस्य जानुयारीमासात् अद्यावधि प्रचलति।

आचार्ययाज्ञवल्क्यप्रोक्तस्य व्यवहारशब्दस्य अथो हि विचारव्यवस्था (Judicial Procedure)। तेन प्रोत्कं व्यवहारपदचतुष्टयं वर्तमानन्याये गृहीतम्। यथा – स्मृतिगर्हितवर्त्मना यदि कोऽपि केनापि पीडितः सन् न्यायप्राप्तयर्थं राज्ञे आवेदयति चेत् तद् व्यवहारपदवीं भजते –

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद् राज्ञे व्यवहारपदं तत्।। (2)

नारदसंहितायामपि उल्लिखितम् –

अभियोगस्तु विज्ञेयः शङ्कातत्वाभियोगतः।
शङ्कासतां तु संसगति तत्त्वं होढ़ाभिदर्शनात्।। (3)

इदानीमपि अभियुक्तौ यदि विचारलयं गत्वा कमपि अभियुनक्ति, तर्हि तदपि न्यायालये विचारयोग्यं भवेत्।

मिथ्यासाक्षिणः दण्डविषये मित्रेषु धर्मशास्त्रेषु सविस्तरमालोचितम्। विषयेऽस्मिन् याज्ञवल्क्येनोत्कम्– यो धनदानादिना कूटान् साक्षिणः करोति स कूटकृत् यः मिथ्यासाक्ष्यमुपस्यापयति स कूटसाक्षी, विवादे पराजये यो दण्डस्तत्र उक्तस्तस्मात् द्विगुणं दण्डं द्वावेव लभेयाताम्। यदि ब्राह्मणः कूटसाक्षी भवति तर्हि विवादे पराजये तस्य राष्ट्रात् निर्वासनं भविष्यति इति याज्ञवल्कयसंहितायामुक्तम् ।

पृथक्–पृथग् दण्डनीयाः कूटकृत् साक्षिणस्तथा।
विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः।। 4

ब्राह्मणस्य दण्डप्राप्तिविषये मनुना उकम् –

लोभात् सहस्रं दण्ड्यः स्यान्मोहात् पूर्वं तु साहसम्।
भयाद् द्वौ मध्यमौ दण्ड्यौ मैत्रात् पूर्वं चतुर्गुणम्।।
कामाद् दशगुणं पूर्वं क्रोधात् तु त्रिगुणं परम्।

अज्ञानाद् द्वे शते पूर्णे वालिश्याच्छतमेव च।। 5।।

वर्तमाने भारतीयदण्डविधेः (Indian Penal code 1860) त्रिनवत्यधिकशत संख्यग्कध ारानुसारं व्यवहारस्य कस्मिन्नपि पर्याये यदि कोऽपि सोद्देश्यं मिथ्यासाक्ष्यं प्रयच्छति, तस्य वर्षसप्तकं यावत् कारावासो भवेत्।

इदानीन्तनकाले विचारव्यवस्थायां दृश्यते साक्ष्यप्रदानकारी गीता प्रभृतिधर्मग्रन्थस्योपरि हस्तस्पर्शेन शपथग्रहणादनन्तरं साक्ष्यं प्रयच्छति इति पूर्वमपि एतादृशी व्यवस्था प्रचलिता आसीत्। याज्ञवल्कयेन एकम् विचारात् पूर्वं साक्षिणः मिथ्यासाक्ष्यस्य कुफलानि स्मारिताः भवन्ति –

साक्षिणः श्रावयेद् वादिप्रतिवादिसमीपगान्।
ये पातककृतान् लोका महापातकिनां तथा।

अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम्।
स तान् सर्वान् अवाप्नोति यः साक्ष्यमनृतं वदेत्।। इति।। ६

याज्ञवल्कयमते साक्ष्यप्रदानविषये स्त्रीबालादयो जना अयोग्याः तदुक्तं तेन –
स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः।
रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः।
पतिताप्तार्यसम्बन्धिसहायरिपुतस्कराः।
साहसी दृष्टदोषश्च निधूताघास्त्वसाक्षिपाः।। इति।। 7

याज्ञवल्कयेन प्राक्तं यत् स्त्रियः नाट्यजीविनश्च साक्ष्यप्रदानेऽयोग्याः कालेऽद्यतने एतेषामपि योग्यत्त्वमुद्घोषितम्। भारतीयसाक्ष्यविधेः अष्टादशधिकशतसंख्यकधारायामुत्कं बालान् वृद्धान् विहाय सर्वे साक्ष्यप्रदाने समर्थाः।

याज्ञवल्कयेन तदीये ग्रन्थे प्रमाणत्रयस्य उल्लेखः कृतः। दिव्यमपि प्रमाणेषु गण्यमासीत्। तदुत्कं–

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते।। इति।। 8

वर्तमाने शासनव्यवस्थायामपि याज्ञवल्कयप्रोक्तस्य दिव्यप्रमाणं विहाय प्रमाणत्रयस्य उल्लेखः परिद्दश्यते। 1872 ईसवीयाब्दे साक्ष्यविधेः संशोधनद्वारा (Indian evidence Act) इति विधिः प्रणीतः।

ऋणदानव्यवस्था प्राचीनकालतः अद्यापि प्रचलति। भारतवर्षे 1940 ईसवीयाब्दे (Money Lender Act) इति विधिः प्रचलितः। ऋणदान–प्रदानयोः विषयाः एतेन विधिना नियन्त्रिताः। प्राचीनधर्मशास्त्रतः ज्ञायते यत् वृद्धिपरिमाणं विविधक्षेत्रेषु भिन्नरुपेण निर्धारितमासीत्। यथा सवन्धकत्रऋणक्षेत्रे प्रतिमास प्रयुक्तस्य द्रव्यस्य अशीतितमो भागो

वृद्धिर्भवति –

अशीतिभागो वृद्धिः स्यान्मासि मासि सवन्धके।

वर्णक्रमाच्छतं द्वित्रिचतुपञ्चकमन्यथा। इति।। 8

याज्ञवल्कयसंहितायामेवं विविधप्रकारेषु ऋणदानक्षेत्रेषु विधानानि प्रदत्तानि, प्राचीनकाले राजा आसीत् प्रदेशस्य सर्वमयकर्ता, तेनैव वृद्धिहारः निर्धायते स्म। परन्तु काले सामग्रिकोन्नयनादिकं विविच्य (Reserve Bank of India) इत्यनेन कोषवृद्धिः निर्धारिता भवति।

याज्ञवल्कय आह–चौरस्य दुष्टत्वं ज्ञात्वापि यदि कोऽपि जनः तस्मै आश्रयादि प्रयच्छति तस्योत्तमसाहसो दण्डः स्यात् –

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्।

दत्वा चौरस्य वा हन्तुजर्जानतो दम उत्तमः।। इति (10)

वर्तमाने विचारव्यवस्थायामपि द्वादशाधिकरतसंख्यकधारायामुकम् (Act 212) यदि कोऽपि अपराधिनः दोषं ज्ञात्वापि आश्रयादि प्रयच्छति, तर्हि तस्य अपराधानुसारं दण्डो भवेत्।

अर्थशास्त्र–याज्ञवल्कय–मनुसंहितादिषु ग्रन्थेषु शुल्कविषयः सविस्तरमालोचितः। प्रजाभ्यः शुल्कमादाय राजा सर्वेषां कल्याणं साधयति स्म। विषयोऽयमुपमासहयोगेन महाकविना कालिदासेन तदीये रघुवंशम् इति महाकाव्ये उक्तम् –

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।

सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।। इति।। 11

इदानीन्तनकालेऽपि सर्वकारः अस्माकं समीपे शुल्क गृह्णान्ति । याज्ञवल्कयेन निगदितम् – ये ये वणिजः शुल्कवचनार्थं पण्यपरिमाणं गृह्णान्ति ते सर्वे पण्याद् अष्टगुणं दण्डनीयाः–

मिथ्यावदन् परीमाणं शुल्कस्थानादपासरन्।

दाण्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी।। इति।। 12

कालोऽद्यतने भारतीयदण्डविधेः चतुः सप्तत्यधिकद्विशतसंख्यकाधारायौम् (Act 274) उल्लिखितं शुल्कवञ्चनार्थं यदि कोऽपि पण्यादिद्रव्येषु अनिष्टपदार्थं मिश्रयति तर्हि तस्य मासषट्कं कारावासो भवेत्।

पुरुषतान्त्रिकभारतीयसमाजे पितृधने केवलमेव पुत्राणामासीत् अग्राधिकारः, न कन्यायाः। वर्तमाने विचारव्यवस्थायां कन्यापुत्रयोः उभयोरेव पितृधने समानाधिकारः विद्यते।

यद्वा भवतु प्राचीनः वैदिकसमाजः नियतिकृतनियमेन परिवर्तितः।

कालक्रमेण मनुष्याणां रुच्यादिकमपि परिवर्तितम्, अतः तत्कालीनाः केचन नियमाः कालोऽद्यतने कालानुरोधेन परिवर्तिताः। केचन च नियमाः सम्पूर्णतया परित्यक्ताः। यथा मनुयाज्ञवल्कयसंहितासु उत्तराधिकारविषयकविधानि 1956 ईसवीयाब्दस्य जुनमासस्य

सप्तदशदिनाङ्के Hindu Succession Act इति विधिना परित्यत्कानि परिवर्तितानि वा इति अलं विस्तरेणेति शिवम्।

तथ्यसूत्राणि:

1) महाभारतम् (12/13/30)
2) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः/5)
3) नारदसंहिता (1/27)
4) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः/89)
5) मनुसंहिता (8/120–121)
6) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः 73–74)
7) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः 70–71)
8) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः/22)
9) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः /37)
10) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः/276)
11) रघुवंशम् (1/18)
12) याज्ञवल्क्यसंहिता (व्यवहाराध्यायः 262)

# ।। श्रीवैष्णवी ।।

राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः), श्रीरणवीरपरिसर, कोट–भलवाल,
जम्मूः – 181122

## वार्षिकी पत्रिका

## हिन्दीवागनुभाग

सम्पादक

डॉ. संजय कुमार मिश्र

# "सम्पादकीय"

शैक्षणिक पत्र–पत्रिकाओं का मुख्य उद्देश्य अध्येताओं की अंतः सृजनशीलता को विकसित कर उनमें सहृदयता का विकास करना होता है। संस्था में पत्र–पत्रिकाओं के प्रकाशन से छात्र–छात्राओं में वैयक्तिक, सामाजिक, राष्ट्रीय व सार्वभौमिक चिन्तन को अभिव्यक्ति मिलती है। यद्यपि वर्तमान युग संचार माध्यमों तथा दृश्य साधनों के विपुल प्रयोग का है फिर भी पत्र–पत्रिकाएँ अपनी विशिष्ट महत्ता तथा उपादेयता को प्रतिस्थापित करने में सफलीभूत रही हैं।

जब तक सृष्टि का संचालन होता रहेगा, तब तक रत्नाकर की उत्ताल ऊर्मियों के सदृश लेखन तथा वाचन की अभिरूचि प्रवाहित होती रहेगी। अन्तः संजाल तथा उससे सम्बन्धित पत्र–पत्रिकाओं, अन्य प्रकाशनों का अध्ययन, साहित्य से सम्बन्धित अथवा साहित्येतर प्रकाशनों के अध्ययन जैसा ही अनिवार्य हो चला है, अन्यथा स्पर्धा व प्रगति की दौड़ में हम सभी अधोवर्ती हो जायेंगे, फिर भी रचनाधार्मिता चरमोत्कर्ष पर प्रभावी है।

ऐसी प्रतीति है कि ज्ञान–विज्ञान परक सामग्री से सम्पृक्त तथा अन्य विविध स्त्रोतों से युक्त इस हिन्दी अनुभाग से हमारे विद्यार्थी समुचित लाभान्वित होंगे। बोधगम्य प्रलेखों को प्राथमिकता इसीलिए दी गई है जिससे अधिकाधिक छात्र–छात्राएँ स्वमनन, चिन्तन से ज्ञानार्जन कर सकें।

–डॉ. संजय कुमार मिश्र
हिन्दी प्राध्यापक

# “विषयानुक्रमणिका”

# "गोस्वामी तुलसीदास का अनुभूति सौन्दर्य"

**डॉ. संजय कुमार मिश्र**
**असि. प्रोफसर हिन्दी (संविदा)**

गोस्वामी जी जिस प्रकार दृष्टिगोचर प्रकृति की असंख्य लीलाओं और व्यापारों की अनन्त राशि का अपने सूक्ष्म निरीक्षण के बल पर चित्रण कर के अमिट आनन्द प्रदान करते हैं, वैसे ही अपनी अप्रतिम काव्यानुभूति के आश्रय से हृदय–सिन्धु में तरंगित वृत्तियों की अनन्त ऊर्मियों की छटा दिखा कर भी अलौकिक रसास्वादन कराते हैं। जिस कवि को भिन्न–भिन्न स्वभावों और रूचियों का जितना प्रशस्त ज्ञान होता है, वह अन्तर्जगत का उतना ही बड़ा मर्मज्ञ होता है। गोस्वामी जी का समस्त काव्य उनकी आभ्यन्तरिक वृत्तियों की अद्वितीय और व्यापक अनुभूति वैसे ही अनुप्रमाणित है जैसे अंग्रेजी भाषा के महाकवि शेक्सपियर की कृतियाँ उनके गम्भीर और सूक्ष्मातिसूक्ष्म अन्तर्जगत की अनुभूति से।

गोस्वामी जी ने मंथरा और कैकेयी का जो संवाद प्रस्तुत किया है, वह उनके मान–मनोवृत्ति के ज्ञान की किरण है। राम की युवराज–पद प्राप्ति के लिए धूम मची है। मंथरा का हृदय क्षुब्ध हो उठा। वह विलखती हुई मुँह बना कर कैकेयी के समीप गई। रानी ने उसकी अन्यमनस्कता का कारण पूछा, परन्तु चेरी ने पहले सटीक उत्तर न दे कर – "नारि चरित कर ढारइ आँसू" का स्वांग किया और पुनः व्यंग्य किया–

"रामहि छाड़ि कुसल केहि आजू।
जिन्हहि जनेसु देइ जुबराजू।।[1]

मन्थरा की ऐसी उक्ति में उसके हृदय का कालुष्य रानी ने प्रथमतः तो उसे "घरफोरी" कहा और राम तथा सीता के प्रति अपने वात्सल्य प्रेम को प्रदर्शित किया–

जौं विधि जनमु देइ करि छोहू। होहुँ राम सिय पूत पुतोहू।
प्रान तें अधिक राम प्रिय मोरें। तिन्ह कें तिलक छोभ कस तोरें।।[2]

ऐसा कहने के बाद भी कैकेयी के हृदय में दासी का गूढ़ अभिप्राय जानने

---

1– मानस–2 / 14 / 2
2– मानस–2 / 15 / 4

की लालसा तो बनी ही रही, दासी को चुप देख रानी के हृदय में उद्वेग–सा हो उठा और उसे कहना पड़ा –

भरत सपथ तोहि सत्य कहु परिहरि कपट दुराउ।
हरष समय बिसमउ करसि कारन मोहि सुनाउ।।[1]

कथन में "भरत सपथ" पद उभय पक्ष के लिए कितना व्यंजक है इसे व्यक्त करने की आवश्यकता नहीं। मंथरा के तर्कों और दृष्टान्तों के तुष्टिकरण के आधार पर कैकेयी का संशय उत्तरोत्तर बढ़ता ही गया और अंत में उसे यह विश्वास हो गया कि सपत्नी कोशल्या ने उसकी जड़ खोदने के लिए ही यह कुचक्र रचा है। इस विचार के दृढ़ हो जाने पर रानी को दासी के द्वारा सुझाई गई युक्ति ही अति हितकर समझ पड़ी। उसके प्रति रानी कैकेयी ने कृतज्ञता प्रकट की –

कुबरिहि रानि प्रानप्रिय जानी। बार–बार बड़ि बुद्धि बखानी।
तोहि सम हित न मोर संसारा। बहे जात कइ भइसि अधारा।।[2]

संवाद के आरम्भ में कैकेयी के क्या विचार थे और अंत में क्या हो गये। इतने बड़े परिवर्तन की स्त्री जाति की मानसिक दुर्बलताओं के सहारे जैसी स्वाभाविक रीति से उपस्थित किया गया, उसे देख कर कौन स्वीकार नहीं करेगा कि तुलसी को आभ्यान्तरिक वृत्तियों की गहरी अनुभूति थी और उसे वे सफलतापूर्वक मूर्त रूप दे सकते थे।

बड़े और प्रतिष्ठित धनवान लोगों को प्रायः हम देखते हैं कि वे फटे–पुराने कपड़ों से लाज ढकने वाले वित्तहीनों से कोई सम्बन्ध रखने में अपना अपमान समझते हैं। यहाँ तक कि उनसे बातचीत करने में भी अपनी निम्नता का अनुभव करते हैं, किन्तु यदि वे अपनी ऐसी मनोवृत्ति का परित्याग कर दें तो इसका बड़ा ही सुन्दर परिणाम हो। उनके कृपा–कटाक्ष से अनाथ तो सनाथ हो ही जायें, उन्हें भी अनाथपति कहे जाने का सौभाग्य प्राप्त हो। इसी स्वाभाविक बात को गोस्वामी जी श्रीराम के प्रति संकेत करते हुये कहते हैं–

"हौं सनाथ ह्वैहौ सही, तुमूहू अनाथपति, जो लघुतहि न भितैहो।।[3]

"लघुतहि न भितैहो" पद उक्ति वैचित्र्य का द्योतक है ही, पर उससे भी बढ़ कर कवि के अन्तर्दृष्टि की निदर्शना है। मनुष्य की यह सामान्य प्रकृति है कि जब

---

1– मानस–2/13

2– मानस–2/23/1

3– विनय पत्रिका 270/2

